# HASYARNABA

A DRAMA IN TWO ACTS,

BY

AGADÍSHWARA BHATTACHARYA.

—[o]—

EDITED AND PUBLISHED BY

*Pandit SHRINATHA VEDANTABAGISHA.*

*Professor of Vedanta Philosophy,*

*Free Sanskrit College of Calcutta.*

SECOND EDITION.

CALCUTTA,

PRINTED AT THE CALCUTTA PRESS.

1896.

To be had From Pandit Jibananda Vidyasagara, B. A.
Superintendent, Free Sanskrit College,
No, 2. Ramanatha Majumdar's Street, Calcutta.

# हास्यार्णवप्रहसनम् ।



श्रीजगदीश्वरभट्टाचार्य्यविरचितम् ।

कलिकातासंस्कृतविद्यामन्दिरस्य

वेदान्ताध्यापकेन

श्रीश्रीनाथवेदान्तवागीशभट्टाचार्य्येण

विरचितया टीकया समलङ्कृतम् ।



द्वितीयसंस्करणम् ।

कलिकातानगरे

कलिकाता यन्त्रे

मुद्रितम् ।

---

सं १८९६ ।

# हास्यार्णवप्रहसनम् ।



## प्रथमोऽङ्कः ।

**स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमात्**
**ऊर्द्ध्वश्वासपरिस्खलत्स्मरकथं सन्दष्टदन्तच्छदम् ।**

---

य: कुलामपि नात्यजत् परवधूर्योनीचणातिचण:
कन्दर्पस्तनयश्च यस्य रमणीं मात्रीयमाणामपि ।
नम्रा यस्य नृपात्मजारतिविधौ दृष्टीऽनिबद्धौ बले:
रङ्गस्थान् रसिकान् करोतु रसिक: कृष्ण: स कामाकर: ॥ १ ॥
माधवीमाधवावीशौ नत्वा टीका वितायते ।
विदग्धह्लादिनी नाम्ना ही-ही-रव-तरङ्गिणी ॥ २ ॥

इह हि हास्यरसस्य आनन्दजनकत्वात् प्राचुर्य्येण तमभिप्रेप्सून् सहृदयान् विलासिन: अवलोक्य प्रचुररसाश्रयार्णवमिव प्रचुरहास्यरसाश्रयार्णवनाम प्रहसनं प्रारीप्सुर्ग्रन्थकर्त्ता ग्रन्थस्य निर्विघ्नपरिसमाप्तये, अविगीतशिष्टाचारदर्शनाद्वा मङ्गलाचरणस्य आवश्यकत्वेन तदाचरणन्तु विधेयमित्यभिप्रेत्य प्रहसनस्य दृश्यकाव्यान्तर्भावात् सूत्रधारपाठ्याष्टपादात्मकनान्दीरूपमङ्गलमाचरति स्वेदेति। मृडानीपते: गिरिशस्य पार्वत्यां गिरिजायां सुरतं शृङ्गार: रसवतां रसभाव-विशेषचतुराणां मुदे हर्षाय आस्तां भवतु। एतेन गिरिशस्य गिरिजायां सुरतव्यापार: शोग्यनायकनायिकाजनकत्वेन रसवतां अतिशयाह्लादजनक इति सूच्यते। तत् पुन: कीदृशम् ? स्वेदस्यन्दितसान्द्रचन्दनचयं स्वेदस्यन्दितेन सुरतश्रम-जनितघर्मसंचरणेन सान्द्र: गाढ़: घनीभूत इत्यर्थ: चन्दनचय: शरीरलिप्तचन्दनसमूहो यस्मिन् तत् तथोक्तम्। अधुनापि सुरतव्यापारे गन्धद्रव्यव्यवहारो दृश्यते। पुन: कीदृशम् ? दोर्वल्लिबन्धश्रमात् दोषौ हस्तौ वल्ल्यौ लते इव इत्युपमितसमास: ।

शीत्काराञ्चितलोचनं सपुलकं भ्रान्तभ्रु नृत्यत्करं
पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ १ ॥

अपिच ।

स्वर्भानुः सुरवर्त्मनाऽनुसरति ग्रासाभिलाषादसा-
विन्दोरिन्दुमुखि ! ग्रसेत किमुत भ्रान्त्या भवत्या मुखम् ।
इत्थं नाथगिरा नभोऽर्पितदृशो वक्त्रे भवान्या भृशं
भामिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥२॥

---

ताभ्यां यो बन्धः बन्धनं तेन जनितः यः श्रमः परिश्रमः तस्मात् परस्परबाहुलता-गाढालिङ्गनपरिश्रमवशात्, ऊर्द्ध्वश्वासपरिस्खलत्स्मरकथं ऊर्द्ध्वश्वासेन दीर्घनिःश्वासानां नियतपरित्यागेन परिस्खलन्ती अस्फुटं निःसरन्ती स्मरकथा शृङ्गारविधौ रसाश्रित-कथा "त्वमसि जीवनं त्वमसि भूषणं" इत्यादिवाक्यं यस्मिन् तत् तथोक्तम्। पुनः कीदृशम् ? सन्दष्टदन्तच्छदं सन्दष्टौ चुम्बितौ दन्तच्छदौ ओष्ठाधरौ यस्मिन् तत् तथो-क्तम्। "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः। पुनः कीदृशम् ? शीत्का-राञ्चितलोचनं शीत्कारेण शृङ्गारनिपुणरसिकवेद्येन [illegible] अञ्चितानि उन्मीलितनिमीलितानि लोचनानि यस्मिन् तत् तथोक्तम्। अतः सपुलकं पुलकेन रोमाञ्चेन सह वर्त्तमानं रोमाञ्चितशरीरमित्यर्थः। पुनः कीदृशम् ? भ्रान्तभ्रु भ्रान्ते भ्रमन्त्यौ भ्रुवौ यस्मिन् तत् तथोक्तम्। पुनः कीदृशम् ? नृत्यत्करं नृत्यन्तौ करौ यस्मिन् तत् तथोक्तं कामोद्दीपकभ्रूभङ्गि-करविक्षेपणादिसहित-मित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

स्वर्भानुरिति। त्रिनयनः त्रीणि नयनानि यस्य सः त्र्यम्बकः सतां रसभाव-विशेषचतुराणां साधूनां इष्टसिद्ध्यै अभिलषितवस्तुप्राप्तये स्तात् भवतु (अस्ते-र्लोटि रूपम्)। सः कीदृशः ? "हे इन्दुमुखि ! चन्द्रानने ! स्वर्भानुः राहुः इन्दोः चन्द्रस्य ग्रासाभिलाषात् कवलाभिप्रायेण सुरवर्त्मना आकाशमार्गेण अनुसरति गच्छति। असौ स्वर्भानुः भ्रान्त्या चन्द्रभ्रमेण भवत्याः मुखं किं ग्रसेत ? उत इति तर्कयामि" इत्थम् एतादृशया नाथगिरा नाथस्य पत्युर्गिरा वाचा नम्र-मुख्याः मानिन्याः सुखोन्नमनाय कौशलवाक्येन इत्यर्थः। नभोऽर्पितदृशः

[नान्द्यन्ते सूत्रधारः] (क)।

अलमतिविस्तरेण (ख) यस्य (ग)।

हास्यप्रस्फुटदन्तमौक्तिकचयच्छायामनोज्ञानना
नानालङ्कृतिसत्कृता रसवतां चित्तप्रमोदस्थली।
सच्छन्दं वरवर्णिनी रसवती सीमन्तिनीव स्वयं
रम्या श्री जगदीश्वरस्य कविता सच्चित्तमानन्दयेत् ॥ ३ ॥

---

नभसि आकाशे अर्पिताः दृशः नयनानि यया तस्याः विनयननिपुणवचनैरनमितवदनायाः मानिन्याः केनचित् कारणेन मानग्रस्तायाः भवान्याः वक्त्रे वदने भृशं वारंवारं यथा तथा कृतचुम्बनः कृतं चुम्बनं येन सः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

नान्द्यन्त इति। "सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः" इति नियमात् नान्द्याः अन्ते, रङ्गद्वारमाश्रित्य नान्दीपाठानन्तरं सूत्रधारः नाटकं अवतारयति इति अभिप्रायः ( क )।

अलमिति। अतिविस्तरेण अतिवाहुल्येन अलं व्यर्थं नान्दीपाठस्य इति शेषः। नान्दीपाठस्यातिशय्ये न शुश्रूषूणां रसिकानां विरक्तिः सूत्रधारं प्रति द्वेषः सञ्जायते इत्यभिप्रेत्य "अलमतिविस्तरेण" इति उच्यते इत्यर्थः ( ख )।

यस्येति। श्रीजगदीश्वरस्य कवेर्विशेषणम् (ग)।

हास्येति। श्रीजगदीश्वरस्य एतद्ग्रन्थकर्त्तुः कविता स्वयं सीमन्तिनी इव वनिता इव सच्चित्तं सतां साधूनां रसिकानां चित्तं मनः सच्छन्दं यथा तथा आनन्दयेत् आह्लादयिष्यति। यथोक्तलक्षणा वनिता सच्छन्दविहारादिना रसिकानां चित्तं यथा आनन्दयति श्रीजगदीश्वरस्य कवेः कवितापि तथा आनन्दयिष्यति इति भावः। सा च कविता, हास्यप्रस्फुटदन्तमौक्तिकचयच्छायामनोज्ञानना हासेन प्रस्फुटस्य प्रकाशितस्य दन्तमौक्तिकचयस्य दन्तमुक्तापङ्क्तेः छायया कान्त्या मनोज्ञानि सुन्दराणि आननानि यस्याः सा तथोक्ता इति पञ्चम्यन्तान्यपदार्थबहुव्रीहिः। यस्याः कवितायाः श्रवणमात्रेण रसिकानाम् आननानि दन्तविस्फारणपूर्वकहास्येन सुन्दरदृश्यानि भवन्तीत्यर्थः। वनितापक्षे तु षष्ठ्यन्तान्यपदार्थबहुव्रीहिः। तथा नानालङ्कृतिसत्कृता नानालङ्कृता उपमाद्यलङ्कारेण वनितापक्षे तु नानाविधभूषणेन च सत्कृता भूषिता। पुनश्च रसवतां रसिकानां चित्तप्रमोदस्थली

अस्ति च तस्य कवेर्निजकुलकमलप्रकाशकदिनकरस्य त्रिपुरहरचरणप्रणामचन्द्रमःप्रकाशितकवित्वकैरवस्य माम् प्रति निदेशः (घ)।

"त्वमिह सुरभिसमयोचितेनास्मद्विरचितेन हास्यार्णवनाम्ना प्रहसनेन विदग्धसमुदायानां हृदयानन्दमुत्पादय" इति (ङ)।

---

चित्तविनोदस्थानमित्यर्थः अन्यत्र तु समानम्। पुनः कीदृशी? वरवर्णिनी व्याकरणादिपरिशुद्धतया श्रेष्ठा, अन्यत्र तु सर्वावयवानवद्यतया श्रेष्ठा। पुनः कीदृशी? रसवती हास्यादिरसविशिष्टा अन्यत्र तु रसविशेषचतुरा, पुनः च रम्या सुखावगम्यत्वेन मनोहारिणी अन्यत्र तु हावभावप्रकाशादिना मनोहारिणी। शार्दूलविक्रीड़ितं वृत्तम्॥ ३॥

अस्तीति। निजकुलकमलप्रकाशकदिनकरस्य निजकुलमेव कमलं तस्य प्रकाशकः दिनकरः सूर्य्य इव, तादृशस्य निजवंशसमुज्ज्वलकारिणः इत्यर्थः। तथा त्रिपुरहरस्य शिवस्य चरणेषु प्रणामरूपेण चन्द्रमसा प्रकाशितं प्रकटीकृतं कवित्वमेव कुमुदं यस्य तादृशस्य, हराराधनेन स्फुरितकवित्वशक्तेरित्यर्थः। तस्य श्रीजगदीश्वरस्य कवेः मां प्रति निदेशः आज्ञा अस्ति वर्त्तते (घ)।

सः कः? इत्यपेक्षायामाह त्वमिति। इह रङ्गे सुरभिसमयोचितेन वसन्तकाल-योग्येन मत्कृतेन अस्मद्विरचितेन हास्यार्णवनाम्ना हास्यमेव अर्णवः हास्यार्णव इति नाम यस्य तेन यथा बहुतरतरङ्गिणीनां निर्गमनेनापि सागररसानाम् अल्पत्वं न दृश्यते तद्वदत्रापि हास्यरसप्राचुर्य्यात् कदाचिदपि हास्यरसानामल्पत्वं नानुभूयते अतः हास्यार्णवनामाभिहितमिदम्।

> "भाणवत् सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।
> भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्।
> वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे।
> तत् पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम्॥"

इत्यादिप्रमाणमवलम्ब्य रचितेनाङ्कद्वयात्मकेन हास्यरसाङ्गिना प्रहसनेन विदग्ध-समुदायानां रसानुभवचतुरनिचयानां हृदयानन्दं मनस आह्लादम् उत्पादय जनय इति (ङ)।

अवश्यमेतत् शासनमनुष्ठेयम्। यतो विदग्धजनमण्डितायां संसदि रसवत्या वाचा विलसितुं नर्त्तितुञ्च ममापि चित्ते कौतूहलमस्ति। अतस्तत् सङ्गीतकमवतारयामि (च)।

( परिक्रम्यावलोक्य च ) (छ)

अहो कुसुमसमयरमणीयता चेतो हरति। यतः (ज)।

चञ्चति चन्दनपवने ध्वनति च मधुमत्तमधुव्रते मधुरम्।
कूजति कोकिलनिकरे न हरति सुरभिर्मनः कस्य ? ॥ ४ ॥



अवश्यमिति। एतत् शासनम् आदेशः अनुष्ठेयं पालयितव्यम्। आज्ञाकारिभिः अस्माभिः एषा आज्ञा अवश्यमेव पालयितव्या इत्यर्थः। यतः यस्मात् विदग्धजनमण्डितायां विद्वज्जनभूषितायां संसदि सभायां रसवत्या वाचा रसात्मकेन वाक्येन विलसितुं रसान् उद्दीपयितुं उद्भावयितुं नर्त्तितुं च ममापि चित्ते मनसि कौतूहलम् औत्सुक्यमस्ति। रसिकबहुलशोभितायां सभायां रसात्मकवाक्येन रसोद्दीपनाय नर्त्तनाय च ममापि चित्ते औत्सुक्यं वर्त्तते इत्यर्थः। अतः तत् रसात्मकं सङ्गीतकं नृत्यं वाद्यं गीतञ्च अवतारयामि प्रारभे "नृत्यं तौर्य्यत्रिकं गीतं त्रिभिः सङ्गीतमुच्यते" इति (च)।

परीति। परिक्रम्यावलोक्य च रङ्गमध्ये इतस्ततो भ्रमणं चतुर्दिक्षु दृष्टिविक्षेपञ्च नाटयित्वा ( छ )।

अहो इति। अहो इति विस्मये। कुसुमसमयरमणीयता कुसुमसमयस्य वसन्तकालस्य रमणीयता सौन्दर्य्यं चेतो हरति आकुलीकरोति रसास्वादनतत्पराणां रसिकानां मनो विमोहयतीत्यर्थः। यतः यस्मात् विमोहयति (ज)।

चञ्चतीति। चन्दनपवने चन्दनवनसंसर्गिमलयमारुते चञ्चति प्रवहति सति मधुमत्तमधुव्रते मधुपानमत्तमधुकरे च मधुरं मनोहरं यथा तथा ध्वनति गुञ्जति सति कोकिलनिकरे कुहुरवसमूहे कूजति कुहुरवान् कुर्वति सति सुरभिः वसन्तसमयः कस्य जनस्य मनश्चेतो न हरति ? न विमोहयति ? सर्व्वेषामपि मनो विमोहयतीत्यर्थः। आर्य्या ॥ ४ ॥

अन्यच्च ।

उड्डीयते स्खलति गुञ्जति कुञ्जमध्ये
पुष्पाणि चुम्बति परिष्वजते द्विरेफीम् ।
घूर्णन् भ्रमत्यपि परागविधूसराङ्गो
भृङ्गोऽद्य किं न कुरुते मधुपानमत्तः ? ॥ ५ ॥

तत् कथमत्र ललनां विना विनोदः ? (झ) । (परिक्रम्य नेपथ्याभिमुखं पठति) (ञ) ।

भृङ्गारसक्तनलिनीदलसत्कटाक्षे !
पीयूषरश्मिवदने ! मदनेषुतुल्ये ! ।

---

अन्यच्च अपिच पुनरपि विशिनष्टि उड्डीयत इति । अद्य वसन्तसमये भृङ्गः भ्रमरः मधुपानमत्तः मधुपानेन मत्तः सन् किं न कुरुते ? मत्तानां सर्वानपि धर्मान् आचरति इत्यर्थः । तथाहि उड्डीयते आकाशमार्गेण गच्छति कदाचिदिति शेषः । कदाचिदिति सर्वासु क्रियासु ऊहनीयम् । स्खलति आकाशपथात् व्रजति । कुञ्जमध्ये लतागह्वराभ्यन्तरे गुञ्जति मधुरं ध्वनति पुष्पाणि चुम्बति पुष्परसाननुभवति । द्विरेफीं भ्रमरीं परिष्वजते आलिङ्गति । परागविधूसराङ्गः परागेण पुष्परजसा विधूसराणि पाण्डुरवर्णानि अङ्गानि शरीराणि यस्य सः, पुष्परजसा पाण्डुरवर्णशरीरः सन् इत्यर्थः घूर्णन्नपि भ्रमति इतस्ततश्चलति । भ्रमर एताभिरुड्डयनादिक्रियाभिः मत्तधर्मान् प्रकाशयतीति भावः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

तत् तस्मात् वसन्तसमये तिर्य्यक्जातीनामपि एतादृशव्यवहारदर्शनात् । कथं केन प्रकारेण ललनां रमणीं विना विनोदः ? चित्तस्य सुखं भवेदिति शेषः (झ) ।

परीति । परिक्रम्य इतस्ततो भ्रमणं नाटयित्वा नेपथ्याभिमुखं नाट्यशालामभिलक्षीकृत्य नाट्यशालाभिमुखीभूय इत्यर्थः । नेपथ्यं नाट्यशालायां नेपथ्यस्य विभूषणे इत्यमरः । पठति, कथयति (ञ) ।

भृङ्गेति । भृङ्गाणां आरः गतिः तेन सक्ता युक्ता या नलिनी तस्याः दले इव सती सुन्दरे कटाक्षे अपाङ्गदेशौ यस्याः तादृशि चञ्चलतारकाशोभिनयने ! इत्यर्थः । पुनः कीदृशी ? पीयूषाण्येव रश्मयो यस्य सः चन्द्रः इव वदनं यस्याः तादृशि !

कन्दर्पसर्पपरिदष्टसुधे ! विदग्धे !
स्निग्धे ! प्रिये ! त्वरितमागमनं विधेहि ॥ ६ ॥

(प्रविश्य) (ट) नटी।

अज्जउत्त ! एसम्हि दे आणाणियोअएण समाअदो ता अणुग्गहवअणं पसादीकरीअदु (ठ)।

सूत्रः। आर्य्ये ! पश्य (ड)।

आशासु प्रसरन्ति कोकिलकलस्वानाँ निकुञ्जान्तरे
गुञ्जन्तो भ्रमराः समुत्कमनसश्चुम्बन्ति पुष्पावलीम्।

---

आर्य्यपुत्र ! एषास्मि ते आज्ञानियोगेन समागता तस्मादनुग्रहवचनं प्रसादीकुरु (ठ)।

---

शशिमुखि ! इत्यर्थः। पुनः मदनस्य कामस्य इषवः शराः एव तुल्यं तुलना यस्याः ताहृशि ! कामबाणस्वरूपे ! इत्यर्थः। पुनः, कन्दर्प एव सर्पः तेन दष्टा प्रथमम् आस्वादिता या सुधा शरीरलावण्यादिरूपा यस्याः ताहृशि ! यस्याः कन्दर्पसर्पगरलमिश्रितशरीरलावण्यादिदर्शनेनैव कन्दर्पसर्पगरलस्य तीक्ष्णप्रभावतया सर्वेषामपि धैर्य्यलोपादिकं सञ्जायते किं पुनः सेवया ? इति भावः। पुनः, विदग्धे ! युवजनमनोरञ्जनकुशले ! पण्डिते ! इत्यर्थः। पुनः स्निग्धे ! औद्धत्यादिदोषरहिते ! मृदुलवचनकथननिपुणे ! इति भावः। हे प्रिये ! प्रियतमे ! त्वरितं शीघ्रं यथा तथा आगमनं विधेहि कुरु अत्र शीघ्रमागच्छ इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ६ ॥

प्रविश्य इति। प्रविश्य नाट्यभूमौ प्रवेशानन्तरम् (ट)।

किं तत् इत्याशयेनाह आर्य्येति। हे आर्य्यपुत्र ! ते तव आज्ञानियोगेन आदेशेन एषा अहं समागतास्मि तस्मात् अनुग्रहवचनं कृपावाक्यं प्रसादीकुरु कृपया वाक्यम् आज्ञापय इति भावः (ठ)।

कथयतीति शेषः। किं तत् ? इत्याह आर्य्येति। आर्य्ये ! प्रियतमे ! पश्य अवलोकय (ड)।

आशास्विति। आशासु दिक्षु कोकिलकलस्वानाः कोकिलानां मधुरध्वनयः प्रसरन्ति कोकिलाः कुहूरवैः कर्णकुहरान् पूरयन्तीत्यर्थः। अपिच। निकुञ्जान्तरे कुञ्जमध्ये

स्पर्शोत्सारितमल्लिकापरिमलः श्रीखण्डवायुर्वह-
त्येवं कं न करोत्ययं स्मरशराक्रान्तं वसन्तोदयः ? ॥७॥

अन्यच्च (ढ) ।

दृष्टान्यपुष्टमधुरध्वनिभिर्नवोढाम्
अध्यापयन्ति किल माधविका व्रतत्यः ।
आलिङ्ग्य चूतमसकृत् कलकण्ठशब्दं
नूत्नप्रसूनपुलकं कुसुमागमेऽस्मिन् ॥ ८ ॥

नटी । ( किञ्चिदन्यचित्ततां नाटयति ) (ण) ।

---

गुञ्जन्तः शब्दायमानाः भ्रमराः द्विरेफाः, समुत्कमनसः समुत्कानि व्यग्राणि मनांसि येषां ते तादृशाः सन्तः मधुपाने व्यग्रचित्ताः इति यावत् । पुष्पावलीं कुसुमश्रेणीं चुम्बन्ति पुष्पात् पुष्पान्तरं गत्वा रसमनुभवन्ति इत्यर्थः । स्पर्शेन उत्सारितः विकीर्णः विच्छिन्नः मल्लिकापरिमलः मल्लिकापुष्पसमूहजनितगन्धो येन तादृशः श्रीखण्डवायुः मलयमारुतः वहति इतस्ततः प्रसरति इत्यर्थः । एवम् अयं वसन्तोदयः वसन्त-कालसमागमः कं जनं स्मरशराक्रान्तं कामशराधीनं न करोति ? सर्वानपि कुसुमायुधशराधीनान् करोतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

अन्यच्च पुनरप्याह इत्यर्थः ( ढ ) ।

दृष्टेति । अस्मिन् कुसुमागमे कुसुमानां पुष्पाणाम् आगमो यस्मिन् तादृशे वसन्त-समये एताः माधविका व्रतत्यः माधविका लताः नूत्नानि नूतनानि प्रसूनानि पुष्पाणि एव पुलकानि यस्मिन् तत् यथा तथा चूतं रसालवृक्षम् आलिङ्ग्य परिष्वज्य हृष्टा आह्लादिता अतएव कलकण्ठशब्दम् अव्यक्तमधुरध्वनि यथा तथा अन्यपुष्टमधुर-ध्वनिभिः कोकिलानां मधुरकूजनैः असकृत् वारंवारं नवोढां नववधूम् अध्यापयन्ति शिक्षयन्ति किल किल इति उत्प्रेक्षायाम् । एवम् आलिङ्गनमधुरवचनादिभिः पतिम् अनुरञ्जय इति नवपाणिग्रहणां वधूं शिक्षयन्ति इत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ८ ॥

किञ्चिदिति । किञ्चिदन्यचित्ततां नाटयति ईषदन्यमनस्कताम् अभिनयति इत्यर्थः ( ण ) ।

सूत्र:। आर्य्ये ! किमिति अन्यचित्तासि ? (त)।

नटी। ण सुणिदं अज्जउत्तेण ? (थ)

सूत्र:। किं तत् ?

नटी। अज्ज ! अज्जेव णियदान्तउरवासिणा अणअसिन्धुणा णरवइणा मण्डलविआरणा कादव्वा तेण अण्णचित्तम्हि। (द)

सूत्र:। कान्ते ! किमेतत् सत्यम् ? (ध)

नटी। अध इं। (न)

नेपथ्ये (प)।

घटयत घटजालं तोयशून्यं पुरस्तात्
पथि तुषनखलेखा क्षिप्यतां भो नियुक्ता: ! ।

---

न श्रुतं आर्य्यपुत्रेण ? (थ)।

आर्य्य ! अद्यैव नियतान्त:पुरवासिना अनयसिन्धुना नरपतिना मण्डलविचारणा कर्त्तव्या तेनान्यचित्तास्मि (द)।

अथ किं (न)।

---

कथयतीति आर्य्ये इति। आर्य्ये ! हे प्रिये ! किमिति कथं अन्यचित्तासि ? अन्यमनस्कासि ? त्वमिति शेष: (त)।

नेति। भवता किं न श्रुतम् इत्यर्थ: (थ)।

आर्य्य इति। आर्य्य ! प्रिय ! नियतं यथा तथा अन्त:पुरवासिना सर्वदा अन्त:पुरस्थायिना अनयसिन्धुना अनयानां नीतिविरुद्धकर्म्मणां सिन्धु: सागर: इव इति अन्वर्थनामकेन अनयसिन्धुना नरपतिना नृपेण मण्डलविचारणा मण्डलस्य राज्यस्य विचारणा विचार: कर्त्तव्या करणीया तेन अन्यचित्तास्मि अन्यमनस्कास्मि (द)।

कान्ते इति। कान्ते ! प्रिये ! एतत् किं सत्यम् ? (ध)

सत्यमेव इत्यर्थ: (न)।

नेपथ्ये इति। नेपथ्ये नाट्यशालाभ्यन्तरे केनापि पठ्यते इति शेष: (प)।

घटयतेति। अयम् अनयसिन्धुनामको नृपति: राजा निजपुरपरिचर्य्यां

निजपुरपरिचर्चां कर्त्तुमेवायमुत्को
नृपतिरनयसिन्धुस्तूर्णमागच्छतीह ॥ ९ ॥

सूत्र। (आकाशे कर्णं दत्त्वा आकर्ण्य च) (फ)
नीतिर्भीतिमती दिगन्तमभजत् क्षिप्रं समं साधुभि-
र्धूर्त्तानां पटुतापरं परधनाक्रष्टं न केषां मनः ?
कान्ता कस्य बलान्न केन रमिता राज्ये यदीयेऽधुना ?
तस्य क्षौणिपतेः समागतिरिह स्थातुं न युक्तं प्रिये ! ॥१०॥
तदितोऽन्यत्र गच्छावः (इति उक्त्वा निष्क्रान्तौ)।
(इति प्रस्तावना)। (ब)

---

कर्त्तुमेव पर्य्यवेक्षणार्थमेव कुर्वाचितं किं शुभं शुभम् अशुभं वा जातम् इत्यादिं द्रष्टुमेव उत्कः उत्कण्ठितः सन् इह संसदि तूर्णं शीघ्रम् आगच्छति आयाति राज्यस्य शुभाशुभदर्शनार्थम् अन्तःपुरमध्यात् इह शीघ्रमायाति इत्यर्थः। अतः अनय-सिन्धोः राज्ञः यावाकालोचितं सौयाविकं द्रव्यजातम् आहर्त्तव्यमित्याशयेनाह घट-घतेत्यादि। भोः नियुक्ताः ! हे राजकर्मचारिणः ! पुरस्तात् पथि अग्रपथि वहिर्भिः-सरणसम्मुखमार्गे तोयशून्यं वारिविहीनं शुष्कमित्यर्थः। घटजालं घटसमूहं घटयत सज्जीकुरुत यूयमिति शेषः, तुषसहिता नखलेखा तुषनखलेखा मध्यपदलोपिकर्म-धारयः तुषनखलेखा च क्षिप्यतां विकीर्य्यतां युष्माभिरिति शेषः। मालिनी-वृत्तम् ॥ ९ ॥

आकाशे इति। आकाशे कर्णं दत्त्वा आकर्ण्य च। श्रवणार्थं आकाशे तिर्य्यक्-भावेन कर्णदानमभिनीय श्रवणमभिनीय च (फ)।

नीतिरिति। हे प्रिये ! यदीये राज्ये यस्य राज्ये इत्यर्थः नीतिः सदाचारः भीतिमती सती साधुभिः समं सह क्षिप्रं शीघ्रं दिगन्तं दूरदेशम् अभजत् दूरदेशे अपससार। अपिच केषां धूर्त्तानां पटुतापरं चातुर्य्यनिपुणं मनः चित्तं परधनाक्रष्टं परधनैराकृष्टं न भवति इति शेषः सर्वेषामपि भवति इत्यर्थः। पुनः कस्य कान्ता रमणी बलात् बलं प्रकाश्य ल्यप्लोपे पञ्चमी केन न रमिता उपभुक्ता सर्वेषामपि रमणी सर्वैरपि परस्परं बलपूर्वकमुपभुज्यते इत्यर्थः। शार्दूल-विक्रीडितं वृत्तम् ॥ १० ॥

तदिति। तत् तस्मात् इतः अस्मात् स्थानात् अन्यत्र गच्छावः यावः

( ततः प्रविशति सानुचरो नरपतिः अनयसिन्धुः )। (भ)

राजा। (स्वगतम्)। अहो दुर्दैवं कुसुमशरशरनिकर-जर्जरशरीरेण रात्रिन्दिवं परवनितानिधुवनविलीनमनसा कियत्कालं पौरपरिचर्चा न कृता। (प्रकाशम्।) (म)

अयि चरश्रेष्ठ! अयथार्थवादिन्! निरूप्यतां तावत् मण्डलम्। (य)

---

आवामिति शेषः। इति राजागमनम् एवम्प्रकारैः प्रस्तुताक्षेपिभिर्वाक्यैः सूचयित्वा निष्क्रान्तौ नाट्यस्थानादपसृतौ। इति प्रस्तावना। तल्लक्षणं यथा। "नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा" (ब)॥

तत इति। ततः प्रस्तावनानन्तरमेव सानुचरः सभृत्यवर्गः, नरपतिः राजा, अनयसिन्धुः अनयानाम् अविनयानां सिन्धुः समुद्रः अन्वर्थनामा (भ)।

स्वगतमिति। स्वगतम् आत्मगतम्। लक्षणं यथा "अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।" अश्राव्यम् इति यत् अभिनेतृभिरश्राव्यं परन्तु श्रोतृभिः श्राव्यमेव। किं तत्? इत्याशयेनाह अहो इति। अहो इति विस्मये। दुर्दैवं किं दुरदृष्टमित्यर्थः। कुसुमान्येव शराः बाणाः यस्य तस्य शरनिकरेण बाणसमूहेन जर्जरं प्रपीड़ितं शरीरं यस्य तेन पुष्पबाणप्रपीड़ितशरीरेण अतः रात्रिन्दिवम् अहर्निशं परवनितायां पररमण्यां यत् निधुवनं शृङ्गारः तस्मिन् विलीनं मग्नं मनो यस्य तादृशेन मया इति शेषः कियत्कालं व्याप्य पौरपरिचर्चा मण्डलविचारः न कृता, कामबाणजर्जरीकृतशरीरत्वेन नियतपररमणीरमणेन च मया राजकार्य्यमपि विस्मृतमिति भावः। प्रकाशम् सर्वश्राव्यं यथा तथा आह इति शेषः। प्रकाशस्य लक्षणन्तु "सर्वश्राव्यं प्रकाशं" स्यात्।" इति (म)

तत् किम्? इत्याशयेनाह अयि इति। अयि! इति सम्बोधनम्। अयथार्थवादिन्! असत्यवचनचतुर! चरश्रेष्ठ! मण्डलं राज्यं तावत् निरूप्यतां परिज्ञायताम्। मया तु बहुकालं राज्ये किं वृत्तं तन्नावगतम् इदानीं तत् ज्ञात्वा मामावेदय इति भावः (य)।

चरः। जं देवो आणवेदि। (र)

(इति निष्क्रम्य समन्तादवलोक्य च पुनः प्रविश्य नृपकर्ण-समीपे उच्चैः (ल)।)

देवो जाणिदं मण्डलरहस्सम्। (व)

राजा। कथय कथय (श)।

चरः। चिरआलं अविआलणाए मण्डले सव्वो ज्जेव ववाहारो अत्तं गदो त्ति (ष)।

राजा। (सक्रोधं) कुतः? (स)

चरः। (संस्कृतमाश्रित्य) देव! यतः।

आलिङ्गन्ति निजाङ्गनां परवधूं हित्वा जनाः साम्प्रतं
नीचः सीव्यति सत्युपानहमहो सद्ब्राह्मणानां गणे।

---

यद्देव आज्ञापयति (र)।

देव! ज्ञातं मण्डलरहस्यम् (व)।

चिरकालं अविचारणया मण्डले सर्व एव व्यवहारः अस्तं गतः इति (ष)।

---

यदिति। महाराज! यदाज्ञापयति यथादिशति तथा करोमीति भावः (र)।

इति निष्क्रम्य राजसकाशात् किञ्चिद्दूरं गत्वा गमनमभिनीय समन्तादवलोक्य च चतुर्दिक्षु अवलोकनमभिनीय च पुनः प्रविश्य राजसन्निधिं आगत्य च नृपकर्ण-समीपे मुखं नीत्वा उच्चैः तारस्वरेण आह इति शेषः (ल)।

देव इति। देव! हे महाराज! मण्डलरहस्यं मण्डलस्य रहस्यं तत्त्वं ज्ञातम् अवगतं मया इति शेषः (व)।

कथयेति। कथय कथय वद वद इति सम्भ्रमे द्विरुक्तिः (श)।

चिरकालमिति। चिरकालं बहुकालं व्याप्य अविचारणया विचाराभावेन मण्डले राज्ये सर्व एव व्यवहारः आचारः अस्तं गतः इति (ष)।

सक्रोधं सक्रोधं यथा तथाह इति शेषः। कुतः इति। कथं व्यवहारो लुप्तः इति ज्ञायते इति शेषः (स)।

वन्दन्ते द्विज मन्त्यजे निवसति व्रीडाविहीना जना
एवं मण्डलवैपरीत्यमधिकं जातं महाभूपतेः ॥ १० ॥

अपिच।

नारीणां नयनेऽञ्जनं न जघने सिन्दूरभामण्डिते
सीमन्ते न च नूपुरौ पदयुगे यावोऽपि नैवेक्षणे।
वक्षोजे मणिमञ्जरी न चरणे काञ्ची कटौ नाधरे
चेत्थं वेशविपर्य्ययः प्रतिगृहं दृष्टः सकष्टं मया ॥ ११ ॥

राजा। (आकर्ण्य आत्मगतम्) चिरकालाविचारणया अयमव्यवहारो जातः पौराणां, भवतु दण्डं विधास्यामि। (छ)

---

आलिङ्गन्तीति। साम्प्रतम् अधुना जनाः सर्वे लोकाः, परवधूं पररमणीं हित्वा विहाय निजाङ्गनां निजवधूं आलिङ्गन्ति परिष्वजन्ते आलिङ्गनमित्युपलक्षणं उपभुञ्जते इत्यर्थः, अहो इति विस्मये, सद्ब्राह्मणानां विद्वद्विप्राणां गणे समूहे सति विद्यमाने नीचः अन्त्यजः चर्मकारः उपानहं चर्मपादुकां सीव्यति आरादिभिरस्त्रैः निर्मिमीते, पुनः व्रीडाविहीना, निर्लज्जाः जनाः अन्त्यजे नीचे निवसति वर्त्तमाने सति द्विजं ब्राह्मणं वन्दन्ते अभिवादयन्ते प्रणमन्ति इत्यर्थः। एवं इत्थंप्रकारैः—महाभूपतेः महाराजस्य—भवतः मण्डलवैपरीत्यं राज्यस्य विपरीतव्यवहारः अधिकं यथा तथा जातं वृत्तम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

नारीणामिति। नयने नेत्रे अञ्जनं कज्जलं दत्तं जघने जङ्घायां, तथा सिन्दूरभामण्डिते सिन्दूरशोभाभूषिते सीमन्ते ललाटोर्द्ध्वस्थितकेशविभागप्रदेशे च न दत्तम्। नूपुरौ सशब्दचरणालङ्कारौ, यावोऽपि अलक्तकं च पदयुगे चरणयुगले च दत्तः ईक्षणे नयने नैव नच दत्तः। मणिमञ्जरी मणिनिर्मितः हारः वक्षोजे कुचयुगोपरि दत्ता, चरणे न दत्ता, काञ्ची मेखला कटौ नितम्बे दत्ता अधरे वदने न च दत्ता। इत्थं अनेन प्रकारेण प्रतिगृहं गृहे गृहे नारीणां कामिनीनां वेशविपर्य्ययः भूषणव्यत्यासः सकष्टं सक्लेशं यथा तथा मया दृष्टः अवलोकितः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ११ ॥

चिरेति। चिरकालाविचारणया बहुकालं व्याप्य अविचारणया विमारा-

(प्रकाशम्) अयि ! आहूयतां कुमतिवर्माख्यो मन्त्री । (च)

चर: । जं देओ आणवेदि (क) ।

(इति निष्क्रम्य तेन सह पुन: प्रविष्ट:) (ख) ।

(प्रविश्य कुमतिवर्मा वामपाणिना नृपतिं नमस्कृत्य अपृष्टोऽपि सन् प्रस्फुटम्) आज्ञापयतु महाराज ! किं अनुष्ठेयम् ? (ग) ।

राजा । मन्त्रिन् ! आस्थानोचितस्थानं विना चिरं मण्डलचर्चा न क्रियते (घ) ।

---

यत् देव आज्ञापयति (क) ।

---

भावेन पौराणां पुरवासिनाम् अयम् अव्यवहार: अत्याचार: जात: संवृत्त: । भवतु तावदस्तु दण्ड' शास्ति' विधास्यामि करिष्यामि (ङ) ।

प्रकाशं सर्वश्राव्यम् यथा स्यात्तथाह—अयि ! भो ! आहूयतां आकार्य्यतां कुमतिवर्माख्यो कु कुत्सिता मति: बुद्धिर्यस्य स: वर्मा वर्मोपाधिक: स एव आख्या नाम यस्य स: इति अन्वर्थनामा मन्त्री अमात्य: (च) ।

देव: महाराज: भवान् यत् आज्ञापयति आदिशति तत् करोमि इत्यर्थ: (क) ।

इति उक्त्वा इति शेष: निष्क्रम्य नेपथ्याभ्यन्तरं गत्वा तेन मन्त्रिणा सह पुन: प्रविष्ट; तदागत; इत्यर्थ: (ख) ।

कुमतिवर्मा प्रविश्य राजसन्निधिं गत्वा वामपाणिना वामहस्तेन वामहस्तमुत्तोल्य नृपतिं राजानं नमस्कृत्य आह इति शेष: । किं तदित्यपेक्षायामाह अपृष्ट इति । अपृष्टोऽपि सन् अजिज्ञासित: सन्नपि प्रस्फुटं सुव्यक्तं यथा तथा आज्ञापयतु आदिशतु हे महाराज ! किं अनुष्ठेयं ? किं कर्त्तव्यं मया इति (ग) ।

मन्त्रिन् ! हे अमात्य ! आस्थानोचितं आस्थानस्य सभाया: उचितं योग्यं स्थानं विना ऋते चिरं चिरकालं व्याप्य मण्डलचर्चा मण्डलस्य चर्चा पर्य्यालोचना विचार: न क्रियते कुत्र स्थित्वा विचारं करोमि एतादृशं स्थानं निर्दिश्यतामिति भाव: (घ) ।

मन्त्री। (ससम्भ्रमं) देव! अत्रैव अस्ति परमरमणीयं स्थानम् (ङ)।

राजा। निवेदय निवेदय (च)।

मन्त्री। बन्धुराथाः कुट्टिन्याः प्राङ्गणम् (छ)।

राजा। (साट्टहासम्) कुमतिवर्मन्! मम चित्तेन सममभिमन्त्र्य संसदि प्रविष्टवानसि। यतो देव्या गलितकुचस्पर्शविमुखस्य वाराङ्गनालिङ्गनाय ममापि अभिलाषः। यतः उदरपतितस्तनीषु कुतः स्मरावस्थितिः? (ज)।

तथाच।

उत्तुङ्गस्तनशैलदुर्गविषमे वामेक्षणानां हृदि
स्थित्वा यत्र बलाद्भिनत्ति हृदयं यूनां सुतीक्ष्णैः शरैः।

---

ससम्भ्रमं सत्वरमाह देव! महाराज! अत्रैव अस्मिन्नेव अस्ति वर्त्तते परमरमणीयम् अतीव सुन्दरं स्थानं भवतां विचारयोग्यः प्रदेशः (ङ)।

निवेदय निवेदय कथय कथय इति सम्भ्रमे द्विरुक्तिः (च)।

प्राङ्गणं चत्वरम् (छ)।

साट्टहासं सोच्चहासं यथा तथा आह इति शेषः। कुमतिवर्मन्निति। हे कुमतिवर्मन्! मम चित्तेन समं मम मनसा सह अभिमन्त्र्य विचार्य्य संसदि सभायां प्रविष्टवानसि आगतोऽसि, यतः देव्याः महिष्याः गलितकुचस्पर्शविमुखस्य पतितकुचस्पर्शरहितस्य पतितकुचयोः स्पर्शमपि न कृतवतः ममापि वाराङ्गनालिङ्गनाय वेश्याङ्गनासङ्गार्थम् अभिलाषः इच्छा वर्त्तते यतः उदरपतितस्तनीषु उदरे पतितौ स्तनौ यासां तासु कुचचुम्बितनाभिदेशासु स्त्रीषु कुतः कथं स्मरावस्थितिः स्मरस्य पुष्पायुधस्य अवस्थितिः अवस्थानं सम्भवेदिति शेषः। परन्तु पलायत इति भावः (ज)।

तदेव प्रमाणयति। उत्तुङ्ग इति। यत्तदोः नित्यसम्बन्धात् यत्शब्द ऊहनीयः। यः पुष्पायुधः पुष्पधन्वा वामेक्षणानां वामलोचनानां रमणीनां उत्तुङ्गस्तनशैलदुर्गविषमे उत्तुङ्गस्तनशैलदुर्गेण उन्नतरकुचपर्वतदुर्गेण विषमे दुष्प्रवेश्ये

तस्मिन्मन्मथयुद्धमर्दनवशात् पातं प्रयाते स्तने
मन्ये दुर्गपराजयादपसरेद्भीरुः स पुष्पायुधः ॥ १२ ॥

मन्त्री। तदुपसर्पावः (झ)।

राजा। (सोल्लासं मन्त्रिणा सह परिक्रामति) (ञ)।

चरः। (परिक्रम्य) (ट)।

देव ! एत्थ ज्जेव पुरदो घणदरघणसारसुरहिचन्दणमियणाभिविविहकुसुमपरिमलो ओसरदु ता एदं बन्धुराए मन्दिरं तक्केमि इदो अणुसरदु देओ (ठ)।

---

देव ! अत्रैव पुरतो घनतरघनसारसुरभिचन्दनमृगनाभिविविधकुसुमपरिमलोऽपसरति तस्मादिदं बन्धुराया मन्दिरमिति तर्कयामि इतोऽनुसरतु देवः (ठ)।

---

यत्र यस्मिन् हृदि हृदये स्थित्वा अवस्थाय सुतीक्ष्णैः शितैः शरैः नारीणां कटाक्षवाणैरित्यर्थः यूनां युवकानां हृदयं बलात् बलं प्रकाश्य भिनत्ति विदारयति। तस्मिन् स्तने कुचदुर्गे मन्मथयुद्धमर्दनवशात् मदनयुद्धे रतिक्रियारूपमदनसंग्रामे मर्दनवशात् पीड़नहेतोः मर्दनन्तूपलक्षणं पतनयोग्याधःखननादिव्यापार इत्यभ्युपगम्यते पातं पतनं प्रयाते प्राप्ते सति पतिते सति इत्यर्थः दुर्गपराजयात् युद्धकरणयोग्यस्थाननाशात् स भीरुः सन् अपसरेत् अपेयात् पलायेत इति यावत् इत्यहं मन्ये यथा राजा दुर्गपराजयात् राज्यं परित्यज्य अपसरति तद्वत् पुष्पायुधः कुचदुर्गपतनात् रमणीराज्यं परित्यज्य कुत्र स्थित्वा युद्धं करिष्यामि इति विचिन्त्य अपसरेत् इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १२ ॥

तस्मात् वाराङ्गनाङ्गसंसर्गात् उपसर्पावः गच्छावः आवाम् (झ)।

सोल्लासं सोत्साहं यथा स्यात् तथा मन्त्रिणा सह परिक्रामति गमनं नाटयति (ञ)।

परिक्रम्य गमनं नाटयित्वा आह (ट)।

देव ! हे महाराज ! घनतरः घनसारः कर्पूरः सुरभिचन्दनञ्च सुगन्धचन्दनं मृगनाभिश्च मृगमदः विविधकुसुमानि च नानाविधपुष्पाणि तेषां परिमलः

राजा। (प्राङ्गणमनुसृत्य सप्रमोदं) इदं बन्धुरायाः प्राङ्गणम्, प्राप्तम् मया तीर्थशतपर्य्यटनपुण्यम् (ड)।

मन्त्री। क्व सा बन्धुरा कुट्टिनी? (ढ)।

(ततः प्रविशति भुजङ्गशतपरिवेष्टिता बन्धुरा) (ण)।

अह्मो! अच्चरीयं अच्चरीयम्। णणु रे भुजङ्गा! अणयसिन्धुणरवइणो धुत्ताणां चक्कवट्टिणो समागमो बट्टदि ता कधं तालजुअलभिङ्गोमद्दणमिलिदाइं बसन्तसमय मुद्दिसिय गीदाइं गाइदुं विलम्बीअद (त)।

---

अहो! आश्चर्य्यम् आश्चर्य्यम्। ननु रे भुजङ्गाः! अनयसिन्धुनरपते धूर्त्तानां चक्रवर्त्तिनः समागमो वर्त्तते तत्कथं तालयुगलभिङ्गोमर्दनमिलितानि वसन्तसमयमुद्दिश्य गीतानि गातुं विलम्बयत (त)।

---

गन्धः अपसरति वहति आयाति इत्यर्थः तस्मात् कर्पूरादिसुगन्धसम्पर्किवायुवहनात् इदम् अदूरवर्त्ति बन्धुरायाः कुट्टिन्याः मन्दिरं गृहम् इति तर्कयामि सम्भावयामि देव! हे राजन्! इतः अस्यां दिशि अनुसरतु आगच्छतु (ठ)।

प्राङ्गणम् अनुसृत्य बन्धुरायाः चत्वरप्राप्तिम् अभिनीय सप्रमोदं सामोदम् इत्यर्थः आह। बन्धुरायाः इदं प्राङ्गणं चत्वरम्। तीर्थशतपर्य्यटनपुण्यं बहुतीर्थपर्य्यटनेन यादृशं पुण्यं तादृशं मया प्राप्तं लब्धं बन्धुरायाः एकप्राङ्गणप्राप्त्या शतशततीर्थपर्य्यटनफलं मया लब्धमिति भावः (ड)।

क्व कुत्र सा बन्धुरा कुट्टिनी (ढ)।

ततः मन्त्रिण आह्वानानन्तरं प्रविशति रङ्गभूमौ आयाति भुजङ्गशतपरिवेष्टिता, भुजङ्गशतेन जारशतेन परिवेष्टिता मिलिता सती आह चेत्यूह्यम् (ण)।

अहो इति विस्मये, आश्चर्य्यम् आश्चर्य्यम्, अभूतपूर्वमेतत्।

ननु रे इति तुच्छसम्बोधने (ओरे इति भाषा) भुजङ्गाः! जाराः! धूर्त्तानां शठानां चक्रवर्त्तिनः अधिपस्य अनयसिन्धुनरपतेः अनयसिन्धुराजस्य समागमः आगमनं वर्त्तते भवति तत् कथं किमर्थं वसन्तसमयं सुरभि-

(उपसृत्य भुजङ्गाः । सहर्षम्) (थ)

महुमत्तमहुव्वदरागयुदो कलकण्ठविलासिणिगाणरदो ।

युअचित्तविआरणपञ्चसरो तुह भोदु महुव्वहुपीदिअरो ॥१२॥

(इति पुनः पुनर्नाट्यति) (द)

राजा । (आकर्ण्य कर्णे स्वैरं) हे कुमतिवर्मन् ! किञ्चि-दियं प्रार्थयते (ध) ।

कुमतिः । निखिले जगति महापातकिनो भवन्त एव, तत् सर्वान् विहाय ते शिरसि भविष्यति वज्रपातः (न) ।

---

मधुमत्तमधुव्रतरागयुतः कलकण्ठविलासिनीगानरतः ।

युवचित्तविदारणपञ्चशरः तव भवतु मधुर्बहुप्रीतिकरः ॥ १२ ॥

---

कालम् उद्दिश्य तालयुगलझिल्लीमर्दनमिलितानि तालयुगलं कांस्यनिर्मितः वाद्य-विशेषः झिल्ली च ( झाँज् ) मर्दनं च ( मादल ) तैः लयप्रदवाद्यविशेषैः मिलितानि सङ्गतानि गीतानि गानानि गातुम् उपकण्ठयितुं विलम्बयत चिरयत यूयमिति शेषः जिज्ञासायां लोट् ( त ) ।

भुजङ्गाः जाराः उपसृत्य समीपं गत्वा सहर्षं साह्लादं यथा तथा आह ( थ ) ।

मधुमत्तेति । मधुमत्तानां मधुपानोन्मत्तानां मधुव्रतानां मधुमात्रपायिनां भ्रमराणां रागेण मञ्जुगुञ्जनेन युतः युक्तः, पुनः कलकण्ठविलासिनीनां मनोहर-कण्ठध्वनिविशिष्टानां कामिनीनां गानस्य रतं शब्दः यस्मिन् सः, तथा यूनां युव-कानां चित्तविदारणः हृदयविदारकः पञ्चशरः पुष्पायुधो यस्मिन् सः, मधुः वसन्तः तव बहुप्रीतिकरोऽतिसुखकरो भवतु भालाम् ॥ १२ ॥

इति सङ्गीतकं पुनः पुनः वारंवारं नाटयति अभिनयति ( द ) ।

आकर्ण्य श्रुत्वा कर्णे श्रुतिसमीपे स्वैरं मन्दं मन्दं यथा स्यात्तथा आह इति शेषः । हे कुमतिवर्मन् ! इयं बन्धुरा किञ्चित् प्रार्थयते याचते अभिलषति इत्यर्थः ( ध ) ।

निखिले जगति इह चराचरे भवन्त एव महापातकिनः महापापाचारिणः तत् तस्मात् सर्वान् अन्यान् विहाय परित्यज्य ते तव शिरसि मूर्ध्नि वज्रपातः अशनि-

राजा । न ज्ञायते किमेवं भविष्यति, तदा किं विधेयम्? (प)

मन्त्री । दैन्यं प्रकटीकृत्य अत्रैव उपवासत्रयं विधेयमिति । (फ)

राजा । (आत्मगतम्) अलं भयेन, प्रणम्य एनां प्रतारयामि । (ब)

(प्रकाशम् ।)

मातर्बन्धुरे ! अयमहं प्रणमामि । (भ)

बन्धुरा । मियङ्कलेहा दे सुप्पसण्णा भोदु (म) ।

राजा । (सहर्षमात्मगतं) निस्तीर्णोऽस्मि महापातकात् न प्रार्थितमनया किञ्चित् । (य)

---

मृगाङ्कलेखा ते सुप्रसन्ना भवतु (म) ।

---

पतनं भविष्यति । ये व्ययं कर्त्तुमुद्यताः त एव अग्निपतनेन आत्मपातमपि न गणयन्ति, सुतरां त एव महापातकिनः इत्यहं मन्ये (न) ।

किमेवं भवेत् इति न ज्ञायते न अवगम्यते मया इति शेषः । तदा तर्हि किं विधेयं? किमनुष्ठेयम्? (प) ।

दैन्यं दरिद्रतां प्रकटीकृत्य आश्रित्य अत्रैव अस्मिन्नेव तीर्थे, उपवासत्रयं विधेयमनुष्ठेयमिति (फ) ।

अलं भयेन? भयेन किं? प्रणम्य प्रणामं कृत्वा एनां बन्धुरां प्रतारयामि वञ्चयामि प्रणामेनैव अस्याः सन्तोषमुत्पादयामीति भावः (ब) ।

मातर्बन्धुरे ! अयम् अहम् एषोऽहं प्रणमामि अभिवादये (भ) ।

मृगाङ्कलेखा नाम्नी काचित् नायिका, ते तव सुप्रसन्ना सन्तुष्टा भवतु इति आशीर्वादवचनम् आह ) (म) ।

अपितु महापातकभयात् महापापकरणात् निस्तीर्णोऽस्मि मम महापातकाशङ्का नास्ति यतः अनया बन्धुरया किञ्चित् किमपि न याचितं प्रार्थितम् (य) ।

(प्रकाशं) क्व सा मृगाङ्कलेखा ? (र)

ततः प्रविशति विशेषालङ्कृतशरीरलतिका मृगाङ्कलेखा। (ल)

मृगा। (सस्मितम्) अम्ब ! को एषो ? (व)।

बन्धुरा। पुत्ति ! ण आणासि ? अणयसिन्धु भुमिस्सरो दे दंशनत्थी (श)।

मृगा। (सस्मितं) इदो अहिअं किं पुण्णम् ? (ष)

राजा। (नायिकामवलोक्य) अहो ! आश्चर्यमस्याः। (स)

सञ्जातेन्दुपराभवं परिलसद्दृगालोलनेत्राञ्जनं

भ्रान्तभ्रूलतमैणनाभितिलकं श्रीखण्डपत्रालकम्।

---

अम्ब ! क एषः ( व )।

पुत्रि ! न जानासि ? अनयसिन्धुः भूमीश्वरः ते दर्शनार्थी ( श )।

इतोऽधिकं किं पुण्यं ? ( ष )

---

क्व कुत्र सा मृगाङ्कलेखा ? ( र )।

ततः प्रविशति इत्यादि स्पष्टम् ( ल )।

अम्ब ! हे मातः ! ( व )।

पुत्रि ! वत्से ! एनं न जानासि न अवगच्छसि। एषः अनयसिन्धुः भूमीश्वरः नृपतिः ते तव दर्शनार्थी दर्शनाभिलाषी, त्वां द्रष्टुमागत इति भावः ( श )।

इतः अस्मात् मत्कर्मकदर्शनादन्यत् अधिकं किं पुण्यं ? मत्कर्मकदर्शनादृते पुण्यं नास्तीति भावः ( ष )।

अहो इति विस्मये ( स )।

सञ्जातेति। अस्याः मृगाङ्कलेखायाः वरतनोः अनवद्याङ्ग्याः आश्चर्यम् अपूर्वम् आस्यम् वदनं कस्य जनस्य प्रियं मनोहारि न भवति ? अपि तु सर्वेषामेव भवतीत्यर्थः। तदास्यं विशिनष्टि। सञ्जातेन्दुपराभवं सञ्जातः सम्भूतः इन्दोश्चन्द्रस्य पराभवः पराजयो यस्मात् तथाभूतम् अस्याः सर्वावयवानवद्यवदनदर्शनेन इन्दुरपि पराभवमनुभवतीति भावः। तथा परिलसद्दृगालोलनेत्राञ्जनं परिलसत् संशोभि

बन्धूकाधरसुन्दरं सुरमुनिव्यामोहि वाक्यामृतं
त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ?॥ १४ ॥

अपिच। अस्या धामसरोवरे भुजविसे वक्त्रारविन्दे भ्रम-
न्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले।
वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं
मग्नश्चित्तमतङ्गजः कथमसावुत्थाय निर्य्यास्यति ?॥ १५ ॥

---

व्यालोलनेत्रयोः चञ्चलनयनयोः अञ्जनं कज्जलं यस्मिन् तथाभूतं तथा भ्रान्तभ्रूलतं भ्रान्ते घूर्णती भ्रूलते यस्मिन् तथाभूतं भ्रूविक्षेपादियुतमित्यर्थः। तथा ऐणनाभितिलकम् ऐणनाभिः मृगमदः तन्निर्मितं तिलकं यस्मिन् तथाभूतं तथा श्रीखण्डपत्रालकं श्रीखण्डः चन्दनविशेषः तेन रचितं पत्रालकं यस्मिन् तत् तादृशं ललाटन्यस्तचन्दनविन्दुशोभि इत्यर्थः। तथा बन्धूकाधरसुन्दरं बन्धूकं रक्तवर्णपुष्पविशेषः तद्वत् योऽधरः तेन सुन्दरं मनोज्ञं तथा सुरमुनिव्यामोहि वाक्यामृतं सुराणां मुनीनाञ्च व्यामोहि मोहजनकं वाक्यामृतं वचनपीयूषं यस्मिन् तत् यथा त्रैलोक्याद्भुतपङ्कजं त्रैलोक्ये त्रिभुवने अद्भुतपङ्कजमिव अभूतपूर्वसरोजस्वरूपमित्यर्थः। वदनमीदृक् न मया कदाप्यवलोकितमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

अस्या इति। अस्याः मृगाङ्कलेखायाः सुयौवनजले सुयौवनं तारुण्यमेव जलं यस्मिन् तथाभूते कस्तूरिकापङ्किले मृगमदरूपपङ्कान्विते तथा तथा वक्त्रारविन्दे वक्त्रं मुखमेव अरविन्दं पद्मं यस्मिन् तथाभूते, तथा भुजविसे भुजौ करावेव विसे मृणाले यस्मिन् तथाभूते, तथा भ्रमन्नेत्रभ्रूभ्रमरे भ्रमन्तौ नेत्रभ्रूभ्रमरौ यस्मिन् तादृशे धामसरोवरे देहसरसि वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधात् वक्षोजौ कुचावेव प्रतिकुम्भिनः प्रतिद्वन्द्विदन्तिनः यौ कुम्भौ तयोः दलनाय मर्दनाय उत्पन्नः यः क्रोधः कोपः तस्मात् द्रुतं सरभसम् उपेत्य गत्वा मग्नः चित्तमतङ्गजः मनोगजः कथं केन प्रकारेण उत्थाय देहसरोवरादिति शेषः। निर्यास्यति ? निर्गमिष्यति ? न केनापि प्रकारेण उत्थातुं समर्थो भविष्यति इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

(पुनर्बन्धुरामन्यमनस्कामवलोक्य) बन्धुरे। कथमन्यहृदयासि? (छ)।

बन्धु। देओ मिअङ्कलेहां मम्महतन्तं अज्झाबअत्थं बीसभण्ड उअज्झाओ आगमिस्सदि एदेण अण्णहिअआम्हि। (च)

राजा। (सहर्षम्) अस्माकं कुलपुरोहितः स एव। (अ)

नेपथ्ये।

दिनोपवासी तु निशामिषाशी
जटाधरः सन् कुलटाभिलाषी।
अयं कषायाम्बरचारुदण्डः
शठाग्रणीः सर्पति विश्वभण्डः॥ १६॥

---

देव! मृगाङ्कलेखाया मन्मथतन्त्रमध्यापयितुं विश्वभण्डः उपाध्याय आगमिष्यति एतेन अन्यहृदयास्मि (च)।

---

कथं अन्यहृदयासि? अन्यमनस्कासि? (छ)

देव! महाराज! मृगाङ्कलेखां मम सुतां मन्मथतन्त्रं कामशास्त्रम् अध्यापयितुं पाठयितुं विश्वभण्डः विश्वस्य भण्ड इति अन्वर्थनामा उपाध्यायः अध्यापकः आगमिष्यति एतेन हेतुना अन्यहृदयास्मि अन्यमनस्कास्मि (च)।

अस्माकं कुलपुरोहितः वंशपुरोधाः (अ)।

नेपथ्ये रङ्गशालाभ्यन्तरे पठति दिनोपवासीति। दिनोपवासी दिवा अनाहारी, तु पुनः निशामिषाशी निशायां रात्रौ आमिषाशी मत्स्यमांसादिभोजी तथा जटाधरः जटिलः सन् कुलटाभिलाषी वेश्यागमनोत्सुकः तथा कषायाम्बरचारुदण्डः कषायं गैरिकादिना रक्तम् अम्बरं वस्त्रं यस्य स, तथा चारुः सुन्दरः दण्डः यष्टिः यस्य स चेति "विशेषणे न च" इति सूत्रेण कर्मधारयः। तथा शठाग्रणीः शठानां धूर्त्तानां अग्रणीः अग्रेसरः विश्वभण्डः तन्नामा अध्यापकः सर्पति गच्छति। उपेन्द्रवज्रावृत्तम्॥ १६॥

(ततः प्रविशति विश्वम्भरः कलहाङ्कुरेण छात्रेण अनुगम्यमानः परिक्रम्य समन्तादवलोक्य च)। (क)

विश्व:। अहो! अभिनवकुसुमकालो वर्त्तते।

अपिच।

कुसुमशरसखो विनोदिबन्धु-
र्विविधविलासकलापमानधामा।
मदयति हृदयान्ययं जनानां
सुरभिरिवासवसञ्चयः सुगन्धिः॥ १७॥

(पुनःछात्रमवलोक्य पठति।)

आकाशे प्रसरन्ति तालयुगलस्वानाः सभिल्लीरवाः
सर्व्वाशामुखरो ध्वनत्यविरतं मन्द्रं मृदङ्गध्वनिः।

---

कलहाङ्कुरेण कलहस्य विवादस्य अङ्कुरः बीजभूतः इति सार्थकनामधेयेन छात्रेण अन्तेवासिना (क)।

अहो! विस्मये, अभिनवकुसुमकालः नूतनसुरभिसमयः। तं विशिनष्टि अपिचेति। अपिच पुनरपि। कुसुमशरसखः कुसुमशरस्य कामस्य सखा सुहृत्, "राजाहः सखिभ्यष्टच्" इति टच् समासान्तः। तथा विनोदिबन्धुः विनोदिनां विलासिनां बन्धुः। तथा विविधविलासकलापानां बहुविधरतिशास्त्रपण्डितानां मानस्य धाम प्रभावो यस्मात् तथाभूतः। "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति" मेदिनी। अयं सुरभिः वसन्तसमयः सुगन्धिः सुरभिः आसवसञ्चयः मदसमूह इव जनानां विलासिनां हृदयानि मनांसि मदयति विक्षेपयति। उपमेयसुरभिपदविशेषणानि उपमानासवसञ्चय इतिपदेऽपि योज्यानि। आसवेन विलासिनां यथा चित्तविकारो जायते तथा अनेन सुरभिणापि। पुष्पिताग्रावृत्तम्॥ १७॥

वसन्ताविर्भावमुपवर्णयन्नाह आकाश इति। तालयुगलस्वानाः तालयुगलस्य कांस्यनिर्मितवाद्यविशेषस्य स्वानाः ध्वनयः, सभिल्लीरवाः भिल्लीरवैः कांस्यनिर्मितवाद्यविशेषध्वनिभिः सह वर्त्तमानाः सन्तः आकाशे नभसि प्रसरन्ति तालयुगलध्वनयः भिल्लीरवैः सह गगनमण्डलं पूरयन्ति इत्यर्थः। तथा सर्वाशामुखरः

कर्पूरागुरुगन्धबन्धु रनिलो व्याप्नोति सर्व्वा दिशो
गेहे कस्य महोत्सवोऽद्य नियतं वत्स ! द्रुतं ज्ञायताम् ॥१८॥

(परिक्रम्य कलहाङ्कुरः) भअवं ! बन्धुराए कुट्टिणीए णिलए महुस्सवो वट्टदि) (ख)।

विश्व:। (सहर्षं) वत्स ! पूर्वसंवत्सरे भोजयितुं तया निमन्त्रिता वयम् तदयमवसरः (ग)।

(इति परिक्रम्य बन्धुरायाः प्राङ्गणं प्रविष्टः।)

बन्धु। उअज्झाअ ! एदं भग्गासणं उववितसदु अज्जो। (घ)

विश्व:। (नाट्येन उपविश्य ससम्भ्रमं) मातर्बन्धुरे ! प्रणमामि (ङ)।

---

भगवन् ! बन्धुरायाः कुट्टिन्याः निलये महोत्सवो वर्त्तते (ख)।

उपाध्याय ! इदं भग्नासनम् उपविशतु आर्य्यः (घ)।

---

सर्वासु आशासु दिक्षु मुखरः सञ्चारी मृदङ्गध्वनिः मुरजरवः मन्दं यथा तथा अविरतं निरन्तरं भाति शब्दायते। तथा अनिलो वायुः कर्पूरागुरुगन्धबन्धुः कर्पूरागुरुचन्दनगन्धसहचरः सन् सर्वाः दिशः व्याप्नोति परिपूरयति सर्वासु दिक्षु वहतीत्यर्थः। हे वत्स ! अद्य कस्य गेहे गृहे नियतं निरन्तरं महोत्सवः महाह्लाद-जनकःव्यापारः भवति ? तत् द्रुतं शीघ्रं ज्ञायताम् अवगम्यताम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

भगवन् ! प्रभो ! महोत्सवः महामोदजनकव्यापारः वर्त्तते, भवति (ख)।

पूर्वसंवत्सरे गतवत्सरे, तया कुट्टिन्या, निमन्त्रिताः सुब्राह्मणबुद्ध्या आहूताः इत्यर्थः। तदयमवसरः तत् तस्मात् अयं समयः पूर्ववत्सरे यदा आहूताः वयम्, अस्मिन् वर्षे सोऽयं समयः अतस्तत्र गन्तव्यमिति भावः (ग)।

उपाध्याय ! हे आचार्य्य ! इदं भग्नासनं जीर्णकाष्ठासनम् उपविशतु अधितिष्ठतु (घ)।

मातर्बन्धुरे ! कुट्टिन्यां मातृसम्बोधनमुचितम्, नायिकायोजिकतया मातृसम्बोधनव्यवहारः अद्यापि दृश्यते। प्रणमामि अभिवादये (ङ)।

पुत्त ! मअणसमुद्दसन्तरणं भोदु (च) ।

विश्व: । (नायिकामवलोक्य ।)

मदनपयोनिधितरणं भवति तदा पीवरकुचकुम्भो मे ।
यद्यवलम्बितुमस्या लभ्यत एवैणनेत्रायाः ॥ १९ ॥

नायिका । (सस्मितमालोकयति) ।

राजा । (स्वगतं) महामहोपाध्यायो विश्वभण्डः । (छ) कुलटाकुलार्च्चिताया बन्धुराया लब्धाशीर्वादः पार्श्वतः समुपविष्टः शुभाशीर्वादं संग्रहीतुम् । (प्रकाशं) भगवन् ! प्रणमामि (ज) ।

विश्व: । भो कलहाङ्कुर ! द्रुतं देहि राज्ञे आशीर्वादम् (झ) ।

---

पुत्र ! मदनसमुद्रसन्तरणं भवतु (च) ।

---

मदनसमुद्रसन्तरणं मदनसमुद्रे कामसागरे सन्तरणं भवतु ते इति शेषः । त्वं कामसागरस्रोतसि सन्तर इति भावः । यद्वा मदनसमुद्रस्य कामसागरस्य सन्तरणं पारगमनं भवतु ते । कामसागरस्य पारं गच्छ इति भावः (च) ।

मे मम मदनपयोनिधितरणं कामसागरे सन्तरणं कामसागरस्य सन्तरणं वा भवति तदा तस्मिन् सन्तरणसमये यदि अस्याः एणनेत्रायाः मृगाक्ष्याः पीवरकुचकुम्भः पीनोन्नतकुचकलसः अवलम्बितुं आश्रितुं लभ्यते यदि अस्याः पीनोत्तुङ्गकुच-कलसलाभः स्यात् तर्हि कामसागरसन्तरणं घटेत, अन्यथा कथं सम्भवेत् ? इति भावः । आर्य्यावृत्तम् ॥ १९ ॥

महामहेति । महामहोपाध्यायः उपाध्यायाग्रगण्यः विश्वभण्डः (छ) ।

यतः कुलटायाः कुलं समूहः तेन अर्चितायाः पूजितायाः सकल गणिकामान्यायाः बन्धुरायाः लब्धाशीर्वादः प्राप्ताशीर्वादः सन् पुनः शुभाशीर्वादं संग्रहीतुं लब्धुं पार्श्वतः अस्याः पार्श्वे समुपविष्टः । भगवन् ! प्रभो ! प्रणमामि अभिवादये (ज) ।

द्रुतं सत्वरं, राज्ञे महाराजाय, आशीर्वादम् आशीर्वचनं देहि दत्स्व (झ) ।

कालहाङ्कुर:। (साट्टहासं शङ्काशनसचितं दूर्वाक्षतमादाय संस्कृतमाश्रित्य उच्चैः) नेत्रे पुष्पोदयो भवतु भवताम्। (ञ)

अपिच।

शत्रोर्वृद्धिर्भियो वृद्धिर्वृद्धिर्व्याधेर्ऋणैनसाम्।
दुर्गतेर्दुर्मतेर्वृद्धिः सन्तु ते सप्त वृद्धयः॥ २०॥
(इति पठित्वा राजशिरसि दूर्वाक्षतमर्पयति।)

राजा। भगवन्! कोऽयं दुष्टवटुः? (ट)

विश्व:। अयमविदितो भवता?। (ठ)

निजवंशधूमकेतुर्भृशमघसेतुः प्रमादचयहेतुः।
परवित्तहरणशूरः कुमतिः कालहाङ्कुरः क्रूरः॥ २१॥

---

(शङ्काशनेति। शङ्काशनसचितं शङ्काशनेन भङ्ग्या सचितं युक्तं दूर्वाक्षतं दूर्वासहिततण्डुलम् आदाय गृहीत्वा भवतां नेत्रे नयने पुष्पाणां अश्रूणामुदयः प्रकाशो भवतु, भवतां नयनजलाविष्कारो भवतु इत्यर्थः (ञ)।

शत्रोरिति। शत्रोः रिपोः वृद्धिः प्रबलता, तथा भियः भयस्य वृद्धिः आतिशय्यं तथा रोगस्य वृद्धिः प्राबल्यं तथा ऋणानाम् एनसां पापानाञ्च वृद्धिः बहुलता दुर्गतेः दुर्दशायाः आतिशय्यं दुर्मतेः दुष्टबुद्धेः वृद्धिः वर्द्धनं, ते तव एताः सप्त वृद्धयः उत्कर्षाः सन्तु भवन्तु। अनुष्टुप् वृत्तम्॥ २०॥

दुष्टवटुः कुत्सितब्राह्मणः (ट)।

अविदितः अज्ञातः भवता एष न ज्ञायते इत्यर्थः (ठ)।

ब्राह्मणं विवृणोति निजेति। अयं निजवंशधूमकेतुः स्ववंशनाशहेतुः यथा धूमकेतुः लोकनाशाय उदेति तद्वत् अयं स्ववंशनाशाय सञ्जातः। तथा अघसेतुः अघानां पापानां सेतुः सोपानं भृशं अतिशयं यथा स्यात् तथा पापप्रवर्त्तको भवति इत्यर्थः। तथा प्रमादचयहेतुः प्रमादचयस्य असत्कार्य्यसमूहस्य हेतुः कारणं, तथा परवित्तहरणशूरः परधनापहरणदक्षः। तथा कुमतिः कु कुत्सिता मतिर्यस्य सः कुबुद्धिरित्यर्थः, क्रूरः खलः, कालहाङ्कुरः इति प्रसिद्धनामा। आर्य्यावृत्तम्॥ २१॥

(पुनर्बन्धुराममवलोक्य) भो वत्स ! कलहाङ्कुर !
प्रलम्बितपयोधरा च्युतरजा विकारास्पदं
सदा विगतहंसका तिमिरलुप्ततारारुचिः।
तिरस्कृतनिशाकरा गतवया इयं बन्धुरा
सदा सपदि दृश्यतां जलधरागमश्रीरिव ॥ २२ ॥

---

बन्धुरां विशिनष्टि प्रलम्बितेति। इयं बन्धुरा सदा जलधरागमश्रीरिव जलधराणां मेघानां आगमः उदयो यस्मिन् सः प्रावृट्काल इत्यर्थः तस्य श्रीरिव शोभेव सपदि हठात् दृश्यताम् अवलोक्यतां हठात् दर्शनेन वर्षाकालश्रीरिव लक्ष्यते इति भावः। सा प्रलम्बितपयोधरा प्रलम्बितौ पतितौ पयोधरौ स्तनौ यस्याः सा कुचयुग्मितशोभितदेशा इत्यर्थः। अन्यत्र तु प्रलम्बिताः जलभारेण नम्रीभूताः पयोधराः मेघाः यत्र सा। तथा च्युतरजाः च्युतं नष्टं रजो यस्याः सा वयोऽधिकत्वेन निवृत्तरजस्का इत्यर्थः। अन्यत्र च्युतानि नष्टानि रजांसि पांशवो यस्याः सा पञ्चम्यन्तान्यपदार्थबहुव्रीहिः वृष्टिबाहुल्येन नष्टधूलिका इत्यर्थः। तथा विकारास्पदं विकाराणां बीभत्सानाम् आस्पदं स्थानं सर्वबीभत्सभूमिरित्यर्थः। अन्यत्र तु विकाराणां रोगादीनाम् आस्पदम् आकरः वर्षासु प्रायेण शरीरिणां विकृतिबाहुल्यदर्शनात् विकारास्पदमिति सङ्गच्छते। तथा सदा विगतहंसका सदा विगतौ सर्वदा विरहितौ हंसकौ पादकटकौ नूपुरौ इत्यर्थः यस्याः सा सर्वदा चरणभूषणरहिता इत्यर्थः। अन्यत्र सदा विगताः अन्तर्हिताः हंसाः मरालाः जलचरपक्षिविशेषाः इत्यर्थः यत्र वर्षाबाहुल्यात् हंससमागमरहिता इत्यर्थः। तथा तिमिरलुप्ततारारुचिः, तिमिरेण चक्षूरोगविशेषेण लुप्ता नष्टतारारुचिः कनीनिकाकान्तिर्यस्याः सा नेत्ररोगयुक्ता इत्यर्थः। अन्यत्र तिमिरेण मेघबाहुल्यात् गाढान्धकारेण लुप्ताः अदृष्टाः ताराणां नक्षत्राणां रुचयः दीप्तयो यत्र सा। तथा तिरस्कृतनिशाकरा तिरस्कृताः भर्त्सिताः निशाकराः पेचकाः यया यद्वा तिरस्कृता निशायाः रजन्याः कराः अंशवः अन्धकाराः इत्यर्थः यया सा अन्धकारविनिन्दितवर्णा इत्यर्थः। अन्यत्र तिरस्कृतः आच्छादितः निशाकरः शशधरो यया सा अदृष्टशशधरा इत्यर्थः। तथा गतवयाः गतम् अतीतं वयो यौवनकालं यस्याः सा अतिवृद्धा इत्यर्थः। अन्यच्च

वत्स ! वन्दनीयतरां बन्धुरामुपसृत्य नमस्कुरु। (ड)

कलहः। (सहर्षोल्लासं परिक्रम्य बन्धुरायाश्चरणद्वयमध्यमागतो दण्डवत्प्रणम्य पुनरूर्द्ध्वजघनमालोक्य सहस्ततालमुच्चैर्विहस्य संस्कृतमाश्रित्य)

भो महामहोपाध्याय ! आश्चर्य्यमस्या बन्धुराया अधोमुखे श्मश्रुश्रेणी। (ढ)

अपिच।

स्तनौ तुङ्गौ निपतितौ कामसंग्राममर्दितौ।
पुरस्तादवलोक्यास्या भगं शुष्कं भयादिव ॥ २३ ॥

बन्धु। (सस्मितं) नष्टो बटुश्रो सत्यकं कलहाङ्कुराहिधाणो इमस्य। (ण)

---

नष्टो वटुः सार्थकं कलहाङ्कुराभिधानमस्य (ण)।

---

गतानि स्वस्थानप्रस्थितानि वयांसि पक्षिणः यत्र सा। एवं समासवैचित्र्येण विशेषणानि उभयत्र योज्यानि। पृथ्वीवृत्तम् ॥ २२ ॥

वन्दनीयतरां परमपूजनीयाम् उपसृत्य समीपं गत्वा नमस्कुरु प्रणम (ड)।

महामहोपाध्याय ! हे गुरो ! आश्चर्य्यम् अद्भुतमेतत्। यत् अधोमुखे भगे श्मश्रुश्रेणी दाड़िका विराजते इति शेषः। भगे श्मश्रुवत् लोमराजिविशिष्टत्वेन भयजनितशुष्कत्वादिधर्मवत्तया च मुखत्वारोपः इति कवेरभिप्रायः (ढ)।

भगस्य शुष्कत्वधर्मवत्तां प्रकटयति अपि चेति। अस्याः भगं, पुरस्तात् पुरोभागे कामसंग्राममर्दितौ स्मरयुद्धदलितौ तुङ्गौ उन्नतौ स्तनौ कुचौ निपतितौ अवलोक्य दृष्ट्वा भयात् भयं प्राप्य इव शुष्कम् अभवत् इति शेषः। यथा भयजनकव्यापारं दृष्ट्वा जनानां मुखं शुष्यति तद्वत् शुष्कमभवदिति भावः। अनुष्टुप् वृत्तम् ॥ २३ ॥

नष्ट इति। नष्टः भ्रष्टः वटुः ब्राह्मणः, अस्य कलहाङ्कुराभिधानं, कलहानां विवादानाम् अङ्कुरः बीजभूतः एव अभिधानं नाम सार्थकं अर्थानुरूपम् (ण)।

विश्वः। (नायिकामवलोक्य) अहो! तरुण्या भाव-
प्रकर्षः। (त)

स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते
रोमाञ्चं तनुते मुहुस्तनतटे व्यालम्बते नाम्बरम्।
आलिङ्गत्यपरां तनोति चिकुरं प्रत्युत्तरं याचते
केयं कामकला विलासवसतिर्लोलेक्षणा भाविनी? ॥२४॥

अपि च। खेलत्खञ्जननेत्रया परिलसत्स्वर्णारविन्दास्यया
पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया।

---

अहो इति विस्मयार्थकमव्ययम्। तरुण्याः युवत्याः भावप्रकर्षः, निर्विकार-चित्तस्य प्रथमविक्रियायाः आतिशय्यम्। निर्विकारचित्तस्य प्रथमविक्रियायाः एतादृशी उन्नतिः मया कदापि न दृष्टा इति भावः। भावस्य लक्षणं "निर्वि-कारात्मके चित्ते भावः प्रथमविक्रिया॥" (त)।

भावप्रकर्षं विशिनष्टि स्वैरमिति। विलासवसतिः विलासानां भावादीनां वसतिः आश्रयः, तथा लोलेक्षणा चञ्चलनयना भाविनी रसविशेषचतुरा, इयं काम-कला रतिस्वरूपा यद्वा, कामस्य पुष्पायुधस्य कला अंशरूपा इत्यर्थः। विधाता कामनिर्माणसामग्र्यविशेषेण निर्मिता इति भावः। का? या स्वैरं मन्दं मन्दं सस्मितं समन्दहासं यथा तथा ईक्षते अवलोकयति दृष्ट्या स्वाभिलाषं प्रकटयति इत्यर्थः तथा क्षणं व्याप्य अलम् अत्यर्थं व्याजृम्भते जृम्भणेन स्मरभावं प्रकाशयतीत्यर्थः। तथा वेपते कम्पते च तथा रोमाञ्चं रोमहर्षं तनुते प्रकटयति सात्त्विकभावावि-र्भावेन कम्पनं रोमहर्षञ्च प्रकाशयतीति भावः। तथा मुहुर्वारंवारं स्तनतटे कुच-तटे अम्बरं वसनं न व्यालम्बते न धारयति कुचतटात् वसनं संनीसंस्रंसते इति भावः। तथा अपरां सखीम् आलिङ्गति परिष्वजते, तथा चिकुरं कुन्तलं तनोति विस्ता-रयति, तथा प्रत्युत्तरं प्रतिवचनं याचते प्रार्थयते किञ्चिन्नोक्तापि स्वसखीभ्यः प्रतिवचनमभिलषतीति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २४॥

पुनरपि वर्णयति अपि चेति। खेलत्खञ्जननेत्रया खेलत्खञ्जनस्य क्रीडत्-खञ्जनपक्षिविशेषस्य इव नेत्रे नयने यस्याः तया क्रीडत्खञ्जनगञ्जननयनया इत्यर्थः।

स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितस्यानया
किं न स्याद्वशिनां वरः स्मरहरः स्मारैः शरैर्जर्जरः ? ॥२५॥

बन्धु। उबज्झाय ! एसा मियङ्कलेहा मे पुत्ती मम्मह तन्तं पठिदुं सुसज्जिदा बट्टदि। (थ)

विश्वः। (विहस्य) अस्माकमध्यापनशून्यमन्दिरं एव वर्त्तते। (द)

---

उपाध्याय ! एषा मृगाङ्कलेखा मे पुत्री मन्मथतन्त्रं पठितुं सुसज्जिता वर्त्तते (थ)।

---

तथा परिलसत्स्वर्णारविन्दास्यया परिलसत् शोभमानं स्वर्णारविन्दं स्वर्णकमलमिव आस्यम् आननं यस्याः तथाभूतया तथा पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया, पीनयोः पीवरयोः उत्तुङ्गयोः अत्युच्छ्रितयोः निरन्तरयोः निरवकाशयोः स्तनयोः कुचयोः भरेण भारेण व्यालोलः आभुग्नः सन् सुन्दरः क्षीणात् क्षीणतरः इति यावत्, मध्यः मध्यभागः कटिः यस्याः तया स्फीतस्फीतनितम्बया स्फीतस्फीतः अतिविशालः नितम्बः पश्चाद्भागो यस्याः तथाभूतया अनया भाविन्या मृगाङ्कलेखया इति यावत्। क्षणमपि क्षणकालमात्रमपि व्याप्य व्यालोकितः प्रेक्षितः सन् वशिनां वरः श्रेष्ठः महायोगीत्यर्थः स्मरहरः स्मरारिः उमापतिः स्मारैः स्मरसम्बन्धिभिः शरैः कामवाणैरित्यर्थः जर्जरः मर्मताड़ितः किं न स्यात् ? अपि तु स्यादेव। एतया अवलोकितस्य स्मरहरस्यापि हरस्य धैर्य्यच्युतिः स्यात् का कथा अन्येषाम् इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

मे पुत्री मम कन्या मन्मथतन्त्रम् अनङ्गशास्त्रं पठितुम् अध्येतुं सुसज्जिता भूषिता सती वर्त्तते (थ)।

अध्यापनशून्यं पाठनावर्जितं मन्दिरं पाठशाला। इदानीम् अस्मत्पाठशाला छात्ररहिता तस्मात् त्वत्सुतायाः पाठनाव्याघातः कदापि न स्यात् एनाम् अहर्निशं पाठयिष्यामि इति भावः (द)।

मृगा। अम्ब ! एसो बुड्ढसाद्दुलो विअ गलिदणखदसणो जराजीण्णपञ्जरो अदिहदव्वीडो अहणिसं मं विडम्बेदि। (ध)

कलहः। (सक्रोधम्) आः पामरि ! गणिए ! परपुत्तवित्तहारिणि ! अम्हाणं उअज्झाअं दिट्ठा ण कुरु कुव्ववसइणं यस्स णिहुअणअणुरत्ता बम्हणी णत्तंदिवं विअड्ढाणां ठाणे बन्धणिबद्धं सिक्खअन्ती अज्जवि भमइ अइसिणेहेण उअज्झाअपुरदो वैहव्यमण्डणं कदुअ णिच्चं अणुमरणत्थं सुसज्जिदा भोदि तं वुड्ढं जप्पेसि। अविअ अज्जवि उअज्झाओ लज्जाउलो वसणं पलिहलिअ जणसङ्के सअणं कुणइ एणं हदव्वीडं जप्पेसि। (न)

---

मातः ! एष वृद्धशार्दूल इव गलितनखदशनः जराजीर्णपञ्जरोऽतिहतव्रीडोऽहर्निशं मां विडम्बयति (ध)।

आः पामरि गणिके ! परपुत्रवित्तहारिणि ! अस्माकम् उपाध्यायं दृष्ट्वा न कुरु कुव्यवसायिनम्। यस्य निधुवनानुरक्ता ब्राह्मणी नक्तन्दिवं विदग्धानां स्थाने बन्धनिबद्धं शिक्षमाणा अद्यापि भमति अतिस्नेहेन उपाध्यायपुरतः वैधव्यमण्डनं कृत्वा नित्यमनुमरणार्थं सुसज्जिता भवति तं वृद्धं जल्पसि। अपिच अद्यापि उपाध्यायः लज्जाकुलः वसनं परिहृत्य जनन्यङ्के शयनं करोति एनं हतव्रीडं जल्पसि (न)।

---

एष अयम् वृद्धशार्दूल इव वृद्धव्याघ्र इव, गलितनखदशनः जीर्णनखदन्तः तथा जराजीर्णपञ्जरः, वार्द्धक्येन जीर्णशरीरान्तरास्थिसमूहः अतिहतव्रीडः अतिनष्टलज्जः। अहर्निशं सर्वदा मां विडम्बयति उपहसति (ध)।

पामरि ! पापिष्ठे ! परपुत्रवित्तहारिणि परतनयधनापहारिके ! कुव्यवसायिनं कुकार्य्यासक्तं न कुरु अस्य बुद्धिं कुत्सिते कर्मणि मा प्रचोदय इति भावः। यस्य उपाध्यायस्य निधुवनानुरक्ता निधुवने क्रीड़ायाम् अनुरक्ता अनुरागिणी सुरतव्यापारानुरागिणीत्यर्थः। ब्राह्मणी पत्नीति यावत् नक्तन्दिवम् अह-

(इति सक्रोधं नाटयति।)

मृगा। (विहस्य) धरणा सा बह्मणी सिस्सी वि धरणो तहा उअज्झाओ। (प)

बन्धुरा। पुत्ति! एदं ण भणिदव्वं मन्ददमं उअज्झाअं ण आणासि बुट्टोवि मअणकमलपआसो दिणणाहो अज्ज वीस-भण्डो धुत्ताणां उअज्झाओ। (फ)

---

धन्या सा ब्राह्मणी शिष्योऽपि धन्यः तथा उपाध्यायः (प)।

पुत्रि! इदं न भणितव्यं मन्दतमम् उपाध्यायं न जानासि वृद्धोऽपि मदन-कमलप्रकाशो दिननाथ आर्य्यः विश्वभण्डः धूर्त्तानामुपाध्यायः (फ)

---

नित्यं विदग्धानां रसिकानां स्थाने सविधे बन्धनिवहं बन्धानां रतिशास्त्राणां निवहं समूहं शिक्षमाणा अधीयमाना सततमेव सा कार्य्यजातं विहाय रतिशास्त्रनिपुण-विदग्धसमीपे सुरतशास्त्रमालोचयन्ती इत्यर्थः। अद्यापि अधुनापि भ्रमति नवं नवं गुरुमनुसन्दधती इति भावः। अतिस्नेहेन निरतिशयानुरागेण, उपाध्यायस्य पुरतः मदीयाचार्य्यस्य अग्रे वैधव्यमण्डनं विधवोचितभूषणं कृत्वा परिधाय नित्यं सदा अनुमरणार्थं सहमरणार्थं सुसज्जिता कृतोद्योगा भवति नित्यमेव सा पतिभक्तिं प्रदर्श्य "भवतश्चितारोहणसमयः समायातः भवता सह चितारोहणं करिष्यामि" इति संभाष्य च विधवाभूषणेन आत्मानं भूषयन्ती तत्सन्निधौ अवतिष्ठते इत्यर्थः। तं आसन्नमरणोचितकालमित्यर्थः गुरुमपि वृद्धं जराक्रान्तं जल्पसि वदसि अप्रिय, एवञ्च अद्यापि उपाध्यायः अध्यापकः लज्जाकुलः त्रपावान् सन् वसनं वस्त्रं परिहृत्य परित्यज्य जनन्यङ्के मातृक्रोड़े शयनं करोति शेते एनम् एतादृश-लज्जाशीलं हतव्रीडं निर्लज्जं जल्पसि कथयसि (न)।

धन्या प्रशंसनीया, सा ब्राह्मणी शिष्योऽपि छात्रोऽपि धन्यः प्रशंसार्हः। तथा तादृक उपाध्यायः आचार्य्यः (प)।

पुत्रि वत्से! इदं मन्दतमं दुर्वचः न भणितव्यं न वाच्यम्। न जानासि नावगच्छसीत्यर्थः। धूर्त्तानां शठानाम् उपाध्यायः आचार्य्यः, वृद्धोऽपि स्थविरो-ऽपि मदनकमलप्रकाशः दिननाथः स्मरसरोरुहविकाशसूर्य्यः (फ)।

विश्व: । (आकर्ण्य आत्मगतं) अहो ! आश्चर्य्यम् । (ब)
प्राप्ता प्रस्फुटकाशपुष्पपदवी केशैस्तथैव भ्रुवा
सम्यक्लोचनपद्मणा च जरसा जीर्णा च दन्तावली ।
शुष्कं मन्मथमन्दिरं निपतितौ शुष्कातिशुष्कौ स्तनौ
एतस्याः सुतरां तथापि वचने जागर्त्ति पुष्पायुधः ॥ २६ ॥
भवतु एषापि क्क यास्यति । (भ)

(प्रकाशम्)

बन्धुरे ! जरातुरा वेपमाना दृश्यसे । (म)
बन्धुरा । सच्चं पुव्वअणुरत्तसिणेहाणं विअड्ढाणं गुणं सुस्मरन्ती अणङ्गज्वराउला क्खु अहं । (य)

---

सत्यं पूर्वानुरक्तस्नेहानां विदग्धानां गुणं सुस्मरन्ती अनङ्गज्वराकुला खलु अहम् ( य ) ।

---

अहो ! आश्चर्य्यं आश्चर्य्यमद्भुतमिदम् (ब) ।

आश्चर्य्यत्वं विवृणोति प्राप्तेति । एतस्याः बन्धुरायाः केशैः कुन्तलैः प्रस्फुटकाशपुष्पपदवी प्रस्फुटानां विकसितानां काशपुष्पाणां काशकुसुमानां पदवी आख्या शोभा इति यावत् प्राप्ता लब्धा भुवा भ्रूयुगलेनापि तथा तादृशी शोभा लब्धा, लोचनपद्मणा नेत्रलोम्ना सम्यक् यथा तथाच लब्धा, सर्व्वबहिर्लोम्नां शुक्लत्ववर्णनेनैव अन्तर्लोम्नामपि शुक्लत्वमनुसन्धेयमित्यभिप्रायः । तथा जरसा वार्द्धक्येन दन्तावली दन्तपंक्तिः जीर्णा दंशनादावसमर्था तथा मन्मथमन्दिरं कामभवनं भगमिति यावत् शुष्कं नीरसतामुपगतम् असकृल्लिङ्गप्रेरणेनापि रसो न निःसरतीति भावः । तथा स्तनौ अपि वक्षोजावपि शुष्कातिशुष्कौ अत्यन्तशिथिलौ सन्तौ निपतितौ नितरामधःखननेन नितान्तविमर्द्दनेन च चुम्बितनाभिदेशावित्यर्थः । तथापि परिणतदशामुपागताया अपि वचने वाचि पुष्पायुधः रतिपतिः सुतराम् अत्यर्थं जागर्त्ति, एतस्या वचनमाकर्णयतां सर्व्वेषामेव कामोद्गमो भवतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

एषा बन्धुरा क्क कुत्र यास्यति गमिष्यति ? (भ) ।

वेपमाना कम्पमाना दृश्यसे अवलोक्यसे त्वमिति शेषः (म) ।

विश्व:। (विहस्य) भो महाराज! मदनज्वरातुरा बन्धरा।

राजा। तत् कथं न आहूयते आतुरान्तकसुतो महावैद्यो व्याधिसिन्धुः? (र)

विश्व:। अपि न ज्ञायते आतुरान्तकसुतोऽसौ किञ्च अस्य गुणा न ज्ञायन्ते? (ल)

राजा। भवतापि न विदितं तस्य उपचारवचनम्? (व)

नेत्रे तप्ता शलाका जठरगुरुगदे श्लीपदे छित्तिरङ्घ्रे-
रश्मर्यां नासिकायां वड़िशमतिमितं तप्ततैलस्य मूले।

---

पूर्वानुरक्तस्नेहानां पूर्वं प्रथमम् अनुरक्तो अनुरागिजने स्नेहः प्रेम येषां तादृशानां विदग्धानां रसिकानां सुस्मरन्ती विचिन्तयन्ती अनङ्गज्वराकुला ज्वरतापपीड़िता खलु एव (य)।

तत् तस्मात् मदनज्वरशान्तये कथं कस्मात् न आहूयते न आकार्य्यते आतुरान्तकसुतः आतुराणाम् अन्तकस्य इति अन्वर्थनामधेयस्य सुतः पुत्रः महावैद्यः दुर्वैद्यः। तथाच "शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे। यात्रायां पथि निद्रायां महत् शब्दो न युज्यते॥" इति। व्याधिसिन्धुः व्याधीनां सिन्धुः सागरः इव इति अन्वर्थनामा (र)।

अपि प्रश्ने न ज्ञायते न अवगम्यते भवतेति शेषः। किञ्च अपि च अस्य गुणाः चिकित्सासामर्थ्यानि (ल)।

न विदितं न ज्ञातं? व्याधिसिन्धोः उपचारवचनम् उपचारस्य चिकित्सोपयोगिसामग्र्याः वचनं कीदृग्रोगेषु कीदृक् द्रव्याणि किं रूपेण प्रयोक्तव्यानि इत्येवंरूपवाक्यम् (व)।

उपचारवचनं विशिनष्टि नेत्रे इति। जठरगुरुगदे जठरस्य उदरस्य गुरुगदे महति रोगे प्रवृद्धोदरामये सञ्जाते सति इत्यर्थः नेत्रे नयने तप्ता अग्निवर्णा शलाका प्रयोक्तव्या, श्लीपदे चरणस्य स्फीतत्वादिरोगे सञ्जाते सति अङ्घ्रेः चरणस्य छित्तिः छेदः कर्त्तव्यः, अश्मर्य्यां मूत्रकृच्छ्ररोगभेदे (पाथुरि) सञ्जातायां सत्यां नासिकायां

हृद्रोगे यन्त्रदारुद्वयनिविड़तरं बन्धनं मुष्कदेशे
ऽप्येतैः रम्योपचारैर्नयति पितृवनं रोगिणं कं न चाशु ? ॥२७॥

अपिच ।

कासे धूमस्तुषाणां बलवति मरुति स्वेदभेदोपवासा
वह्नेर्मान्द्ये च पिष्टं सपिशितमनिशं वारिपानं कफार्त्तौ ।
पित्तार्त्तावारनालं त्रिकटुरपि जलद्रोणिका सन्निपाते
किं ब्रूमो व्याधिसिन्धोर्गुणमिह सुतरामेकवक्त्रेण सम्यक् ? ॥२८॥

---

नसि अतिशितं शाणितं तीक्ष्णमित्यर्थः वड़िशं मत्स्यवेधनं प्रेरयितव्यं वड़िशेन नासिकावेधनं कर्त्तव्यमित्यर्थः। शूले शूलरोगे सञ्जाते सति तप्ततैलम् उष्णतैलं प्रयोक्तव्यं पाययितव्यमिति भावः। हृद्रोगे हृदयरोगे सञ्जाते सति मुष्कदेशे अण्डकोषे यन्त्रदारुद्वयनिविड़तरं यन्त्रदारुद्वयस्य निविड़तरम् अतिशयान्तरान्तराव-काशशून्यं यथा तथा बन्धनं विधेयमित्यर्थः, यन्त्रयुक्तकाष्ठद्वयेन अत्यन्तपेषणं कर्त्तव्य-मिति भावः। एतैः रम्योपचारैः सुन्दरभैषज्यसाधनैः कं रोगिणम् आतुरं पितृवनं श्मशानभूमिं आशु शीघ्रं न नयति ? न प्रापयति ? सर्वानपीत्यर्थः। एवं चिकित्सया सर्वानपि रोगिणः आशु यमालयं प्रापयतीति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥२७॥

कास इति। कासे कासरोगे सञ्जाते सति तुषाणां धूमः प्रयोक्तव्यः, मरुति वायौ बलवति प्रबले सति वायुरोगे सम्यक् जाते सति इत्यर्थः। स्वेदभेदोपवासाः स्वेदः घर्मश्च भेदः विरेचनञ्च उपवासः लङ्घनञ्च ते कारयितव्याः इति शेषः। वह्नेः जठराग्नेः मान्द्ये अल्पीभावे मन्दाग्नावित्यर्थः। सपिशितं पिष्टं मांससहित-पिष्टकं भोजनाय दातव्यमिति शेषः। कफार्त्तौ श्लेष्मजनितपीड़ायाम् अनिशं सततं वारिपानं जलसेवनं कारयितव्यमिति शेषः। पित्तार्त्तौ पित्तजनितपीडायाम् आरनालं काञ्जिका त्रिकटुरपि शुण्ठीपिप्पलीमरिचरूपः प्रयोक्तव्यः इति शेषः, सन्निपाते त्रिदो-षजात्मके विकारे सञ्जाते जलद्रोणिका जलानां द्रोणिका चतुराढ़कपरिमाणं स्नाना-र्थं दातव्या इति शेषः। इह जगति व्याधिसिन्धोः सुतरां एतादृशमुत्कृष्टतरं गुणम् एकवक्त्रेण एकमुखेन सम्यक् साकल्येन किं कथं ब्रूमः वयमिति शेषः। व्याधि-सिन्धोरेतादृशं गुणम् एकमुखेन सम्यक् वक्तुं केनापि न शक्यत इति भावः ॥ २८ ॥

नेपथ्ये ।

पानीयस्थूलपादे कथमपि धरया धारिते साङ्कुरौघे
हस्तन्यस्ताञ्चलाग्रप्रचलितपवनैर्वारयन् मक्षिकालीं
कासात् कण्ठस्वनौघैः सपदि मुखरयन् दिङ्मुखं व्योमवीथी-
मध्येष व्याधिसिन्धुः प्रविशति सरुजामन्तको राजवैद्यः ॥२९॥

(व्याधिसिन्धुः प्रविश्य शनैः परिक्रम्य सगर्वम् ।)

वैद्योऽहं व्याधिवर्गाणामाश्रयोऽप्ययशोनिधिः ।
मया चिकित्सितः सद्यो मार्कण्डेयो न जीवति ॥ ३० ॥

अपिच ।

सर्वौषधानि तिष्ठन्तु चिकित्सापि च तिष्ठतु ।
मम दर्शनतो रोगी किल प्राणैर्विमुच्यते ॥ ३१ ॥

---

मध्यशालाभ्यन्तरीचरितवचनं विवृणोति पानीयेति । साङ्कुरौघे अङ्कुराणाम् उडुम्बरवत् वर्त्तुलाकारमांसपेशीनाम् ओघैः समूहैः सह वर्त्तमाने । धरया धरण्या कथमपि कृच्छ्रेण धारिते धृते । पानीयस्थूलपादे पानीयेन रसाविर्भावेन स्थूलपादे स्फीतपादे उपविष्टामिति शेषः मक्षिकालीं मक्षिकासमूहं हस्तन्यस्ताञ्चलाग्रप्रचलितपवनैः हस्तन्यस्तेन हस्तधृतेन अञ्चलाग्रेण परिधेयवसनाग्रभागेन प्रचलिता सञ्चरिताः ये पवनाः वायवः तैः वारयन् निराकुर्वन् सन् कासात् कासरोगाद्धेतोः कण्ठस्वनौघैः कण्ठध्वनिसमूहैः दिङ्मुखं दिङ्मण्डलं व्योमवीथीञ्च आकाशमार्गञ्च सपदि तत्क्षणादेव मुखरयन् ध्वनयन् सन् एषः सरुजां रोगिणाम् अन्तकः नाशकः राजवैद्यः राजचिकित्सकः प्रविशति रङ्गभूमौ आगच्छति । स्रग्धरावृत्तम् ॥२९॥

वैद्यस्य साहङ्कारवचनं वर्णयति वैद्य इति । अयशोनिधिः अयशः अकीर्त्तिरेव निधिः धनं यस्य सः, अहं वैद्योऽपि चिकित्सकोऽपि व्याधिवर्गाणां अगदसङ्घानाम् आश्रयः आधारः । मार्कण्डेयः (कल्पान्तस्थायी कश्चित् ऋषिः) मया चिकित्सितः सन् सद्यस्तत्क्षणात् न जीवति म्रियते इति । मया चिकित्सितः सन् कल्पान्तस्थायी अपि तत्क्षणात् म्रियते, अल्पायुषां तु का कथा इति भावः । अनुष्टुप् वृत्तम् ॥ ३० ॥

पुनर्विवृणोति अपिचेति । सर्वौषधानि सर्वभैषज्यानि तिष्ठन्तु दूरे आसतां

( उपसृत्य (क) ) भो भो महामहोपाध्याय ! प्रथमहं नमस्करोमि । (ख)

विघ्नः । कालहाकुर ! देहि भिषजे शुभाशीर्वादम् । (ग)

कालह । [हस्तमुद्यम्य उच्चैः ।] (घ)

स्वल्पायुर्भव साम्प्रतं चिररिपु र्मा जीव दण्डद्वयं
वक्षस्ते खरकण्टको निविशतां भोगी गले चुम्बतु ।
अन्येषामपराधतस्तव शिरो राज्ञा च संयम्यतां
हा भक्षी भव सर्वदा तव गृहे वह्निः सदा ज्वलतु ॥ ३२ ॥

---

चिकित्सापि च रोगनिर्णयोऽपि तिष्ठतु दूरे आस्तां, रोगी आतुरः मम दर्शनतः अवलोकनादेव इत्यर्थः प्राणैः विमुच्यते किल वियुज्यते, किल इति निश्चये । रोगनिर्णयपूर्वकभैषज्यप्रयोगादीनां का कथा, मामवलोक्य रोगी अवश्यमेव म्रियते इति भावः । अनुष्टुप् वृत्तम् ॥ ३१ ॥

उपसृत्य समीपं गत्वा (क) ।

भो भो महामहोपाध्याय ! हे आचार्य्य ! अयमहम् एषोऽहं नमस्करोमि अभिवादये (ख) ।

भिषजे आतुरान्तकसुताय वैद्यराजाय (ग) ।

हस्तमुद्यम्य बाहुमुत्तोल्य उच्चैः आह इति शेषः (घ) ।

तमाशीर्वादं विशिनष्टि स्वल्पे ति । साम्प्रतम् इदानीं चिररिपुः आजीवनं शत्रुः सन् इत्यर्थः स्वल्पायुः अत्यल्पायुर्भव अत्यल्पजीवितकालोऽपि यमजनितक्लेशान् अनुभव इत्यर्थः । स्वल्पशब्दस्य अपेक्षया चिरत्वमायातं तन्निराकरोति दण्डद्वयमिति दण्डद्वयं मुहूर्त्तकाले मा जीव मुहूर्त्तं व्याप्य जीवनं ते माभूत् इत्यर्थः । खरकण्टकः तीक्ष्णाग्रकण्टकः ते तव वक्षः हृदयं निविशतां प्रविशतु !तीक्ष्णाग्रकण्टकेन हृदययन्त्रणाम् अनुभव इति भावः । भोगी सर्पः गले कण्ठदेशे चुम्बतु सर्पः तव गलदेशे दशतु इत्यर्थः । अन्येषाम् अपरेषाम् अपराधतः अपराधहेतोः पराप-राधेन इत्यर्थः । तव शिरः मस्तकं राज्ञा नृपेण संयम्यतां सं‌छिद्यतां, राजा चि परापराधेन तव मस्तकच्छेदं करोतु इत्यर्थः । यदि तु एतदाशीर्वचनं ममोघं तथापि परापराधस्य अनियतकालत्वेन कदा शिरश्छेदो भविष्यति इति पर्यवहितः सन् आह

व्याधिः। अरे पामर वटो! मामवक्षिपसि। (ङ)

विश्व:। (विहस्य) भो व्याधिसिन्धो! तव पितुः भ्रातुरा-त्मकस्य अन्तकालयप्राप्तस्य कुशलम्? (च)

व्याधि:। कुतः कुशलं भवद्दर्शनं विना? (छ)

(पुनर्नायिकामवलोक्य)। (ज)

कस्य न लुब्धं हृदयं काञ्चनरुचिना कुचद्वयेनास्याः।
आलोक्य हेमकुम्भौ न भवति भुवि कस्य वा लोभः? ॥ ३२ ॥

विश्व:। भो महावैद्य! कश्चित् चिकित्साप्रश्नो मां मुखरयति। (झ)

---

"हा" इत्यादि सर्वदा सर्वस्मिन्नेव समये हा भक्तः हाशब्देन युक्तं भक्तम् अन्नं यस्य तादृशी भव सर्वदैव त्वम् अन्नाय हा हा इति कुरु, तथा सदा तव गृहे आलये वह्निः अग्निः नृत्यतु ज्वलतु गृहदाहं करोतु इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३१ ॥

पामर! पापात्मन्! वटो! ब्राह्मण! अवक्षिपसि तिरस्करोऽसि (ङ)।

विहस्य हास्यं कृत्वा। अन्तकालयप्राप्तस्य यमालयगतस्य मृतस्य इत्यर्थः कुशलं मङ्गलम् (च)।

भवद्दर्शनं विना भवतः दर्शनमन्तरेण कुतः कथं कुशलं मङ्गलम्? पितुः समीपं गत्वा मङ्गलं विधत्ताम् इति भावः (छ)।

पुनः नायिकां मृगाङ्कलेखाम् अवलोक्य दृष्ट्वा आह इति शेषः (ज)।

किन्नत् इत्याशयेनाह कस्येति। अस्याः मृगाङ्कलेखायाः काञ्चनरुचिना कनककान्तिना कुचद्वयेन कुचयुगलेन कस्य जनस्य हृदयं मनः लुब्धं गृध्नु प्राप्त्या-शया उत्कण्ठितं न भवति? सर्वेषामपि भवतीत्यर्थः। तदेवार्थान्तरन्यासेन दृढ़यति, भुवि इह भूतले हेमकुम्भौ कनककलसौ अवलोक्य दृष्ट्वा कस्य जनस्य लोभः प्राप्त्याशा न भवति? न जायते? अपि तु सर्वेषां मनसि जायते इत्यर्थः। आर्या-वृत्तम् ॥ ३२ ॥

भो महावैद्य! अत्र तु महत्शब्देन वैद्यस्य अवैद्यत्वमाक्षिपति। हे दुश्चिकि-

व्याधिः। (सगर्वम्)। (ञ)

पिण्डाय तण्डुलतिलप्रचयं निधाय
पाणौ खनित्रमपि चारु चितार्थमेव।
वैद्योऽस्मि रोगिजनबान्धवसंप्रदायैः
प्रष्टव्य एव हृदयेषु विमुच्य मोहान्॥ २४॥

विघ्नः। (विहस्य) महावैद्योऽसि। (ट)

(पुनः सहर्षम्) महावैद्य! प्रचुरतरशृङ्गाररसप्रागल्भ्यात् श्लेष्मातुरा बन्धुरा तत् क्रियतामस्या उपचारः। (ठ)

व्याधिः। सुतप्तकटुतैलेन कथमस्या गुदे नस्यं न दीयते? तत् अलं विलम्बेन। (ड)

---

त्मक इत्यर्थः कश्चित् चिकित्साप्रश्नः काचित् चिकित्साविषयिणी जिज्ञासा मां मुखरयति वाचालयति काञ्चित् चिकित्सावार्त्तां प्रष्टुमिच्छामि इत्यर्थः (झ)।

सगर्वं साहङ्कार माह (ञ)।

किं तत् इत्याशयेनाह पिण्डायेति। रोगिजनबान्धवसम्प्रदायैः रोगिजनानां आतुरजनानां बान्धवसम्प्रदायैः बन्धुवर्गैः कर्तृभिः हृदयेषु अन्तःकरणेषु ये मोहाः तान् विमुच्य परित्यज्य, हृष्टान्तःकरणैरिति भावः। पिण्डाय चितापिण्डदानार्थं तण्डुलतिलप्रचयं तण्डुलसहिततिलपात्रम्। तथा चारुचितार्थं सुन्दरचिताखननार्थमेव खनित्रमपि (खोन्तानामकच) पाणौ हस्ते निधाय कृत्वा, वैद्यः अहम् एव प्रष्टव्योऽस्मि, अधुना किं कर्त्तव्यम् इत्यहमेव जिज्ञासितव्योऽस्मीति भावः। वसन्ततिलकं वृत्तम्॥ २४॥

विहस्य हास्यं कृत्वाह, महावैद्योऽसि, त्वं महावैद्यः (ट)।

महावैद्य! प्रचुरतरशृङ्गाररसप्रागल्भ्यात् अतिशयशृङ्गाररसस्य प्राबल्यात् प्रकोपादित्यर्थः। श्लेष्मातुरा श्लेष्मणा कफेन आतुरा कातरा बन्धुरा, कुट्टिनी इत्यर्थः। तत् तस्मात् अस्याः उपचारः चिकित्सा क्रियतां विधीयताम् (ठ)।

अस्याः गुदे अपानदेशे गुदं त्वपानं पायुर्ना इत्यमरः। यद्वा राढ़देशप्रसिद्धे गुदे योनिदेशे इत्यर्थः। सुतप्तकटुतैलेन अत्युष्णनूतनसार्षपतैलेन इति यावत्

वत्सु । (विहस्य आत्मगतम् (ठ)) एसो बुद्धिरहिदो वेज्जो । (ण)

(प्रकाशम् ।) (त)

भयवं ! भग्गेण पुच्छिदव्वो महावेज्जो । (थ)

विश्व० । (आकाशमवलोक्य) आः ! सहस्रावधानेन मया विस्मृतः प्रश्नः (विहस्य) वत्स कलहाङ्कुर ! आरय वैद्यप्रश्नम् । (द)

---

एष बुद्धिरहितो वैद्यः (ण) ।

भगवन् ! भाग्येन प्रष्टव्यो महावैद्यः । (थ)

---

कथं कस्मात् गमनं न दीयते ? एतावान् कालः चिकित्साव्यतिरेकेण कथम् अतिवाहितः इति भावः । तत् तस्मात् विलम्बेन अलं ? चिरेण अलं ? शीघ्रं गमनं प्रयोजय इति भावः (ड) ।

विहस्य आत्मगतम् अधिनेतृभिरश्राव्यं श्रोतृभिः श्राव्यमित्यर्थः (ठ) ।

बुद्धिहीनः निर्बुद्धिरित्यर्थः (ण) ।

प्रकाशं सर्वश्राव्यं यथा तथा आह । (त)

भगवन् हे प्रभो ! इति विश्वभण्डस्य सम्बोधनं, भाग्येन दैववशात् प्रष्टव्यः अधुना किं कर्त्तव्यमिति जिज्ञासितव्यः महावैद्यः । दैववशात् अस्य जिज्ञासायाः पात्रं लब्धम् इति भावः । (थ)

आकाशमवलोक्य ऊर्द्ध्वं दृष्टिं निक्षिप्य विस्मृतिमभिनीय इत्यर्थः । आः ! इति विस्मृतिजन्यकोपसूचकमव्ययम् । सहस्रावधानेन सहस्रेषु सहस्रविषयेषु अवधानं मनःसंयोगो यस्य तादृशेन युगपत् सहस्रविषयेषु अवहितेन इत्यर्थः मया इति शेषः । प्रश्नः जिज्ञासितव्यो, विषयः विस्मृतः । (विहस्य हास्यं कृत्वा) वत्स ! तात ! कलहाङ्कुर ! आरय उद्दीपय वैद्यप्रश्नं वैद्यं जिज्ञासितव्यविषयं स्मृतिपथारूढं कारय इत्यर्थः । (द)

कलहः । (प्रस्फुटं) महावेज्ज ! मिअङ्कलेहाए पउरचन्दणकुङ्कुमकत्थुरिआपरिलेवणेण गात्तकण्डुअणं समुप्पण्णं ता एत्थ किं कादव्वं ता भण । (ध)

बन्धु । (स्मितं कृत्वा आत्मगतं) जधा उवज्झाओ सिस्सोवि तधा जुत्तं भस्मपुञ्जे सारमेआवट्ठाणम् । (न)

व्याधिः । वारिपर्णीचयैः साकं दृष्ट्वा वृश्चिकमङ्गतः ।

दातव्यो वानरीरेणुः सद्यः कण्डुहरो हि सः ॥३५॥

बन्धु । सुट्ठु ओसहं । (प)

---

महावैद्य ! मृगाङ्कलेखाया प्रचुरचन्दनकुङ्कुमकस्तूरिकापरिलेपनेन गात्रकण्डूयनं समुत्पन्नं तदत्र किं कर्त्तव्यं ? तद् भण । ( ध )

यथा उपाध्यायः शिष्योऽपि तथा, युक्तं भस्मपुञ्जे सारमेयावस्थानम् । ( न )

सुष्ठु औषधम् ( प ) ।

---

प्रचुरचन्दनकुङ्कुमकस्तूरिकापरिलेपनेन प्रभूतमलयजकुङ्कुममृगनाभिव्यवहारेण इत्यर्थः । गात्रकण्डूयनं गात्रेषु शरीरेषु कण्डूयनं कण्डूतिः समुत्पन्नं जातं तत् तस्मात् कण्डूयनजननात् अत्र कण्डूयननिवारणार्थं किं कर्त्तव्यं ? किमनुष्ठेयं ? तत् भण कथय । ( ध ) ।

उपाध्यायः आचार्य्यः यथा यादृशगुणसम्पन्नः शिष्योऽपि छात्रोऽपि तथा तादृशगुणसम्पन्नः । तदेव अर्थान्तरन्यासेन दृढयति युक्तमिति भस्मपुञ्जे भस्मराशौ सारमेयावस्थानं सारमेयाणां कुक्कुराणाम् अवस्थानम् अवस्थितिः युक्तम् उचितम् । (न)

अङ्गतः अङ्गेषु वारिपर्णीनां चयैः समूहैः साकं सह वृश्चिकं यूककीटं ( गौया ) दृष्ट्वा संदृश्य वानरीरेणुः वानरीणां अतिसूक्ष्मकण्टकाकृतिरेणुविशेषाच्छादितफलानां रेणुः कण्टकाकृति सूक्ष्मरजः ( आलकुसी ) दातव्यः प्रयोक्तव्यः, सः तादृग्रूपेण प्रयुक्तो वानरीरेणुः हि इति निश्चये । सद्यः तत्क्षणात् कण्डुहरः कण्डूयननाशको भवति । अनुष्टुप् वृत्तम् ॥ ३५ ॥

सुष्ठु सुन्दरम् औषधम् भैषज्यम् ( प ) ।

विघ्न:। भो शिष्य ! भवतापि विस्मृतम्। (फ)

कलह:। (स्मृतिमभिनीय (ब)) हुं सरिदं। (भ)

महावेज्ज ! सुरदसमरविमद्दणादो मुण्डपीड़ातुरा बन्धुरा ता एत्थ ज्जेव किं करीअदु ? (म)

बन्धु। (सस्मितं स्वयमुपसृत्य) (य) महावेज्ज ! जाणिदं दे विज्जत्तणं तहावि कहणिग्गहत्थं ओसहं भण। (र)

व्याधि:। (स्वयं विचिन्त्य ही ! ही !) कथमेवं न निगद्यते ? पुरा राज्ञो मरुत्प्रागल्भ्यात् सिंहासने उपविष्टस्य श्लेष्मा जातस्तदा अस्मत्पिता चरकसुश्रुतवाग्भटनागार्जुनतत्त्व-विदा आतुरात्मकेन नृपतेर्लोचनद्वयं क्षारचूर्णेन विमार्ज्य जलौकाशतं प्रदाय श्लेष्मा अपनयित:। (ल)

---

हुं स्मृतम् (भ)।

महावैद्य ! सुरतसमरविमर्दनात् मुण्डपीड़ातुरा बन्धुरा तदत्रैव किं करोतु ? (म)।

महावैद्य ! ज्ञातं ते विद्वत्त्वं तथापि कफनिग्रहार्थम् औषधं भण (र)।

---

भो। इत्यादि स्पष्टम् (फ)।

स्मृतिमभिनीय स्मरणं नाटयित्वा (ब)।

हुं इति स्मरणार्थमव्ययम् आं ज्ञातम् (भ)।

महावैद्य ! पुन: पृच्छामीति शेष: सुरतसमरविमर्दनात् अनङ्गसंग्रामसंक्षोभ-वशात् मुण्डपीड़ातुरा मस्तकपीड़ाकातरा तत् वशात् अत्रैव मुण्डपीड़ारोग्यकरणार्थं किं करोतु ? किं विधत्ताम् (म)।

उपसृत्य वैद्यसमीपं गत्वा (य)।

हे महावैद्य ! ते तव विद्वत्त्वं चिकित्साशास्त्रेषु पाण्डित्यं ज्ञातं मया अवगतं तथापि तव चिकित्साशास्त्रेषु पाण्डित्ये ज्ञातेऽपि कथयामि इत्यर्थ:। कफनिग्रहार्थं श्लेष्मनाशनार्थम् औषधं भैषज्यं भण कथय (र)।

ही ! ही ! इत्यव्ययं उच्चैर्विहस्य इत्यर्थ: एवं कफप्रकोपयेत् इत्यर्थ:। कथं न निगद्यते ? न उच्यते ?। पुरा इत:पूर्वमित्यर्थ: सिंहासने उपविष्टस्य आसीनस्य

बन्धु । एत्थ ज्जेव किं कादव्वम् ? (व)

व्याधिः । अल्पोपचारसाध्ये अलं गुरूपचारेण । (श)

वरटो भङ्गरोलश्च जलौका वाथ वृश्चिकः ।

घ्राणे नेत्रे च दातव्याः सद्यः श्लेष्मविनाशिनः ॥ ३६ ॥

बन्धु । (विहस्य) सच्चं आदुरान्तकपुत्तो तुमम् । (ष)

(नेपथ्ये कलकलः ।) (स)

---

अत्रैव किं कर्त्तव्यम् ? ( व ) ।

सत्यम् आतुरान्तकपुत्रस्त्वम् ( ष ) ।

---

राज्ञः नृपतेः महत्प्रागल्भ्यात् श्लेष्मा कफरोगः जातः सम्भूतः । तदा तस्मिन्नेव समये चरकसुश्रुतवाग्भटनागार्जुनतत्त्वविदा चरकादिचिकित्साशास्त्राणां तत्त्वविदा पारदृश्वना इत्यर्थः आतुरान्तकेन आतुराणामन्तक इति अन्वर्थनामधेयेन, अस्मत्पित्रा अस्मत्तातेन नृपतेः राज्ञः लोचनद्वयं नयनयुगलं क्षारचूर्णेन क्षार-गुटिकया निर्माज्य प्रक्षाल्य जलौकाशतं जलौकानां जलवासिकीटविशेषाणां ( जोंक् ) शतं प्रदाय श्लेष्मशोषणाय तस्योपरि उपवेश्य श्लेष्मा कफः अपचयितः संशोषितः ( त्र ) ।

अत्रैव मम पीड़ाविनाशार्थमेव किं कर्त्तव्यं ? किं विधेयम् ? ( व ) ।

अल्पोपचारसाध्ये अल्पचिकित्सानाश्ये रोगे इति शेषः । गुरूपचारेण गुरु-चिकित्सया अलं, गुरुचिकित्सायाः प्रयोजनं नास्ति इति भावः ( श ) ।

चिकित्सामाह वरट इति । वरटः कीटविशेषः ( बोल्ता ) भङ्गरोलश्च भङ्गरवकारी कीटः ( भीमरुल् ) जलौका रक्तपायी कीटः ( जोंक् ) वृश्चिकः अलकलासः, एते वरटादयः नेत्रे नयने घ्राणे नासिकायाञ्च दातव्याः उपवेशयि-तव्याः यतः एते सर्वे सद्यः श्लेष्मविनाशिनः सद्यः कफनाशकाः भवन्ति इत्यर्थः । अनुष्टुप् वृत्तम् ॥ ३६ ॥

आतुराणाम् अन्तकः तस्य पुत्रः त्वम् इति सत्यं ,शोचेत् एतादृक् गुणवान् कार्य भवेः इति भावः ( ष ) ।

( नेपथ्ये नाट्यशालाभ्यन्तरे कलकलः कोलाहलः संवृत्तः ( स ) ।

राजा। (आकाशे कर्णं दत्त्वा आकर्ण्य च प्रकाशम्) अये! प्रतीहार! आयतामितत् को मम दर्शनार्थी? तं प्रवेशय। (ङ)

प्रती। जं देओ आणवेदि (च)। (निष्क्रम्य सम्यगवलोक्य पुनः प्रविष्टः।) देअ! रत्तकल्लोलणामहेओ णाविदो एक्केण पोरजणेण रत्तकलेवरेण अञ्चलगहीदो वट्टदि। (क)

राजा। प्रवेशय। (ख)

प्रती। (तथा कृत्वा) देअ! एस रत्तकल्लोलो णाविदो (ग)। (ततः प्रविशति रक्तलिप्ताङ्गेन पौरजनेन अञ्चलगृहीतो रक्तकल्लोलः परिक्रम्य संस्कृतमाश्रित्य पठति) (घ)।

---

यत् देव आज्ञापयति (च)।

देव! रक्तकल्लोलनामधेयो नापित एकेन पौरजनेन रक्तकलेवरेण अञ्चलगृहीतो वर्त्तते (क)।

देव! एष रक्तकल्लोलः नापितः (ग)।

---

अये प्रतीहार! हे द्वारपाल! आयताम् अवगम्यताम् एतत् किं वृत्तमित्यर्थः। मम दर्शनार्थी दर्शनाभिलाषी कः? तं प्रवेशय मत्समीपमानय इत्यर्थः (ङ)।

यत् आदिशति तत् करोमि इत्यर्थः (च)।

देव! महाराज! रक्तकल्लोलनामधेयः—रक्तानां कल्लोलः स्रोतो यस्मात् स नामधेयो यस्य सः इति अन्वर्थनामा क्षौरकार्य्यकरणवशात् रक्तस्रोतोजननात् रक्तकल्लोल इति नाम लब्धवान् इत्यर्थः। नापितः, एकेन रक्तकलेवरेण रक्ताक्तशरीरेण पौरजनेन नगरवासिना कर्त्रा अञ्चलगृहीतः अञ्चलेषु वस्त्रप्रान्तेषु गृहीतः धृतः सन् वर्त्तते तिष्ठति (क)।

प्रवेशय मत्समीपमानय (ख)।

एषः अयम् आनीतः इति शेषः (ग)।

संस्कृतमाश्रित्य पठति—संस्कृतवाण्या आत्मनः कार्य्यकुशलत्वं वर्णयति इत्यर्थः (घ)।

मयि क्षुरं गृह्णति मानुषाणां भवेच्छयाशा तनुतामुपैति ।
स्ववृत्तिनिर्वाहपरे च रक्तचयोर्मिमालाकुलिता तनुः स्यात् ॥२७॥

अपि च ।

आर्त्तनादमधिकं प्रकुर्वतां हस्तपादगलबन्धपीडनात् ।
यं छिनद्मि नखरं नृणामहं स प्ररोहति पुनर्न जन्मना ॥ २८ ॥

(सभास्थानमवलोक्य दर्पणमर्पयति ।) (ङ)

राजा । बन्धुरे ! आदौ मुकुरं गृह्णातु भवती । (च)

बन्धु । (गृहीत्वा अवलोक्य च) भअवं ! तिमिराउला म्हि

---

मयीत्यादि । मयि क्षौरकर्मार्थं क्षुरं गृह्णति धृतवति सति मानुषाणां मानवानां भवेच्छयाशा संसारदर्शनाभिलाषः तनुतां क्षीणताम् उपैति प्राप्नोति मानवानां जीविताशा न सम्भवति इत्यर्थः । च परन्तु मयि स्ववृत्तिनिर्वाहपरे क्षौरकर्मकरण-प्रवृत्ते सति, तनुः शरीरं रक्तचयोर्मिमालाकुलिता, रक्तचयेन शोणितसमूहेन जाता या ऊर्मिमाला तरङ्गमालाः ताभिराकुलिता व्याप्ता स्यात् भवेत् । उपेन्द्रवज्रा-वृत्तम् ॥ २७ ॥

पुनर्विवृणोति आर्त्तेति । हस्तपादगलबन्धपीडनात् करचरणगलदृढबन्धनजनित-क्लेशात्, अधिकं यथा तथा आर्त्तनादं कातरध्वनिं प्रकुर्वतां कातरस्वरेण आक्रन्दताम् इत्यर्थः नृणां मानवानां यं नखरं नखं अहं छिनद्मि कृन्तामि, स नखरः जन्मना जन्मान्तरेणापि पुनः न प्ररोहति न जायते नखरच्छेदनात् प्राक् करचरणकण्ठ-बन्धनमन्तरेण तं छेत्तुं न शक्नोमि यतः नखरच्छेदसमये अङ्गुलिच्छेदमपि करोमि इति भावः । रथोद्धता वृत्तम् ॥ २८ ॥

सः रक्तकपोलः नापितः आस्थानं सभास्थलम् अवलोक्य दृष्ट्वा दर्पणं मुकुरम् अर्पयति ददाति (ङ) ।

हे बन्धुरे ! आदौ प्रथमतः मुकुरं दर्पणं गृह्णातु नयतु भवती । भवतीति बन्धुराया विशेषणं राज्ञः पूज्यत्वेन उक्तम् इति भावः (च) ।

दप्पणे ण कधम्पि मुहाकिदिं पेच्छिस्सि ता दप्पणं गेह्णतु अज्जो । (छ)

राजा । भो व्याधिसिन्धो ! भवदधिष्ठानेन तिमिराकुला कुट्टिनी । (ज)

व्याधिः । कथम् अग्निवर्णशलाका स्थिरहस्तेन अस्या लोचनतारकामध्ये न दीयते ? तर्हि चक्षुषोरभावात् कुतस्तिमिरता । (झ)

मृगा । (विहस्य) पढमदो वेज्जस्तु लोअणे परीक्खीअदु ।(ञ)

व्याधिः । अलमिहावस्थानेन गणिकापि माम् उपहसति (इति निष्क्रान्तः ।) ट)

---

भगवन् ! तिमिराकुलास्मि दर्पणे न कथमपि मुखाकृतिं प्रेक्षिष्ये तद्दर्पणं गृह्णातु आर्यः (छ) ।

प्रथमतः वैद्यस्तु नयने परीक्ष्यते ( ञ ) ।

---

तिमिराकुलास्मि अहं तिमिरेण नयनरोगविशेषेण आकुलास्मि कातरास्मि तस्मात् दर्पणे मुकुरे मुखाकृतिं मुखप्रतिविम्बमित्यर्थः कथमपि कथञ्चिदपि न प्रेक्षिष्ये द्रक्ष्यामि । तत् तस्मात् दर्पणं मुकुरम् आर्य्यः भवान् गृह्णातु धारयतु (छ) ।

भवदधिष्ठानेन भवताम् अधिष्ठानेन उपस्थित्या अत्र उपस्थितिमात्रेणैव इत्यर्थः । तिमिराकुला नयनरोगकातरा ( ज ) ।

अग्निवर्णशलाका उत्तप्तलौहशलाका इति यावत् स्थिरहस्तेन नियतहस्तेन, अस्याः वन्धुरायाः लोचनतारकामध्ये नयनकनीनिकाभ्यन्तरे न दीयते न प्रेर्य्यते इत्यर्थः, तर्हि, चक्षुषोर्नयनयोरभावात् कुतः कथं तिमिरता नयनरोगत्वम्, आश्रयाभावे आश्रयिणोऽप्यसम्भवात् नयनरोगक्लेशं न अनुभविष्यति इति भावः ( झ ) ।

वैद्यः प्रथमतः प्राक् नयने रोगिण्याः नयनद्वयं परीक्षते अवलोकयति पश्चात् अन्यलक्षणं पश्यति इति भावः ( ञ ) ।

इह, अवस्थानेन अलम् ? अवस्थातुं न युक्तं, यतः गणिकापि वेश्यापि माम् उपहसति तिरस्करोति इत्यर्थः ( ट ) ।

विश्व:। (मुकुरं गृहीत्वा अवलोक्य च ससम्भ्रमं) अहो वार्धक्यं जातम्। (ठ)

शुक्लत्वं जरसा कचेषु दशनाः शीर्णा विशीर्णा तनु-
स्तैमिर्य्यं नयने श्रुतौ नच वचोलब्धिः श्लथत्वं पले।
अस्माकन्तु कथं तथापि विलसद्वाराङ्गनालिङ्गन-
व्यामोहाय मनः सदैव बलते चित्रं चरित्रं विधेः॥ २९॥

राजा। अरे नापित! ब्रूहि स्वाभिमतम्। (ड)

रक्षः। देव! एदेण दाव पीड़ाकादरेण समं अह्माणं कलहो वट्टदि। (ढ)

---

देव! एतेन यावत् पीड़ाकातरेण सममस्माकं कलहो वर्त्तते (ढ)।

---

अहो! इति विस्मये, वार्द्धक्यं वृद्धत्वं जातं संवृत्तम् (ठ)।

वृद्धत्वं विवृणोति शुक्लत्वमिति कचेषु केशेषु शुक्लत्वं शौक्ल्यं दशनाः दन्ताः शीर्णाः पतनोन्मुखाः, तनुः शरीरं विशीर्णा जीर्णा दुर्बला इति यावत्। नयने तैमिर्य्यं तिमिररोगः (ह्वानि) श्रुतौ कर्णे न च वचोलब्धिः वचसः वाक्यस्य लब्धिः उपलब्धिः लाभः, पले मांसे श्लथत्वं शिथिलता लोलता इति यावत्, एतत् सर्वम् अस्माकम् जरसा वार्द्धक्येन अभवत् इत्यर्थः। तथापि एवंरूपायाम् अवस्थायां सत्यां विलसद्वाराङ्गनालिङ्गनव्यामोहाय, विलसन् देदीप्यमानः वाराङ्गनानां वारनारीणाम् आलिङ्गने परिष्वङ्गे यो व्यामोहः औत्सुक्यं तस्मै, नियतवेश्यालिङ्गनौत्सुक्यार्थम् इति यावत् सदैव सर्वदैव मनः चित्तं बलते चञ्चलं भवति इत्यर्थः। विधेः विधातुः चरित्रं व्यवहारः चित्रम् आश्चर्य्यम्। एवमवस्थायामपि नियतवेश्यालिङ्गनाय अस्माकं मनः सर्वदैव बम्भ्रमीति इति विधातुः चरित्रस्य माहात्म्यं नोचेत् कथमेवं भवेदिति भावः॥ २९॥

अरे इति तुच्छसम्बोधनं नापित! दिवाकीर्त्ते! ब्रूहि कथय स्वाभिमतम् स्वस्य अभिप्रायम् (ड)।

एतेन पौरजनेन, पीड़ाकातरेण आर्त्तेन, समं सह, कलहः विवादः, वर्त्तते अस्ति (ढ)।

राजा। मन्त्रिन् ! विचार्य्यतामनयोर्न्यायः। (च)

मन्त्री। अरे नापित ! निगद्यतां प्रथमतः कस्य गोचरः। (त)

रजकः। पढमं अह्माणं। (थ)

पौरः। ममाङ्गे शोणितप्रवाहः प्रथमतो गोचरस्तव। (द)

मन्त्री। अरे नापित ! कथं ते गोचरः ? (ध)

रजकः। (आत्मगतं) धण्णो मन्तिवरो णरराअजोग्गो। (न)

(प्रकाशम्।)

भअवं ! एदस्सज्जेव णअरजणस्स णक्खरमूलाकस्सणात्थं लोअणमज्झणिहिदं वड़िसं भग्गं एदेण कारणेण। (प)

---

प्रथममस्माकम् (थ)।

धन्यः मन्त्रिवरः नरराजयोग्यः (न)।

भगवन् ! एतस्यैव नगरजनस्य नखरमूलाकर्षणार्थं लोचनमध्यनिहितं वड़िशं भग्नम् एतेन कारणेन (प)।

---

मन्त्रिन् ! हे अमात्य ! विचार्य्यतां निर्णीयताम् अनयोः नापितपौरजनयोः न्यायः सत्यत्वं धर्माधिकरणोपस्थितस्य विवादस्य प्रथमं सत्यत्वं प्रतिपादय इति भावः (च)।

निगद्यताम् उच्यतां, प्रथमतः कस्य जनस्य गोचरः इन्द्रियविषयः प्रथमं केन अवलोकितः एष शोणितप्रवाहः ? तदुच्यताम् इति भावः (त)।

प्रथमं प्राक् अस्माकं गोचरः इति शेषः। प्राक् अस्माभिरेव अवलोकित इति भावः (थ)।

मम अङ्गे शरीरे शोणितप्रवाहः शोणितस्रोतः प्रथमतः प्राक् तव गोचरः तव इन्द्रियविषयः प्राक् त्वया अवलोकित इत्यर्थः (द)।

कथं कस्मात् ते तव गोचरः इन्द्रियविषयः ? अरे नापित ! श्रूयते, पुरवासिना किमुच्यते त्वया पूर्वमुक्तम् "अस्माकं गोचरः" इति तत्सर्वमसत्यमिति भावः (ध)।

धन्यः प्रशंसार्हः। नरराजयोग्यः नृपतितुल्यो भवानित्यर्थः (न)।

भगवन् ! प्रभो ! एतस्यैव नगरजनस्य पुरवासिनः नखरमूलाकर्षणार्थं मध्य-

मन्त्री। भद्रम् उक्तम् अनेन। अरे पौर! वड़िशमूल्यं दातुमर्हसि। (फ)

बन्धु। (सस्मितं) धण्णो मन्तिवरो णरवइजोग्गो। (ब)

(प्रविश्य प्रतीहारः।) (भ)

भअवं! मिथ्याण्णवणामहेयो बम्हणो अज्जं पेच्चिदुमिच्छदि। (म)

विश्व:। प्रवेशय।

प्रती। (तथा करोति)।

(ततः प्रविशति मिथ्यार्णवः।)

मिथ्या। (समन्तादवलोक्य) भो महामहोपाध्याय! अस्मत्प्रतिवासिजामातृप्राङ्गणे कश्चिद् ब्राह्मणश्चतुर्वेदाध्यायी ब्रह्मचर्य्यनिपुणः संवत्सरस्नायी मक्षिकापादाहतिव्रणितदेहो

---

भगवन्। मिथ्यार्णवनामधेयो ब्राह्मण आर्य्यं प्रेक्षितुमिच्छति (म)।

---

च्छेदनाय, नखरमूलानाम् अङ्गुलीनाम् आकर्षणार्थं लोचनमध्ये नयनमध्ये निहितं दत्तं यत् वडिशं तत् भग्नम्, एतेन कारणेन, नयनप्रविष्टवड़िशस्य भङ्गेन इति यावत् शोणितप्रवाहः रक्तकल्लोलः सञ्जातः। वड़िशभङ्गमन्तरेण कथं एतादृक् शोणितप्रवाहः सम्भवति इति भावः (प)।

भद्रम् उक्तं सुष्ठूक्तं रे पौर! पुरवासिन्! वड़िशमूल्यं नयनप्रविष्टभग्नवड़िशस्य मूल्यम् अर्घ्यं दातुम् अर्पयितुम् अर्हसि योग्यस्त्वम् (फ)।

धन्यो मन्त्रिवरो नरपतियोग्यः (ब)।

द्वारपालः (भ)।

मिथ्यानाम् असत्यानाम् अर्णवः सागर इव स एव नामधेयो यस्य स इति अन्वर्थनामा ब्राह्मणः आर्य्यं महामहोपाध्यायं प्रेक्षितुं द्रष्टुमिच्छति अभिलषति (म)।

भो महामहोपाध्याय! इत्यादि। महामहोपाध्यायलक्षणन्तु अस्य पूर्वापरगुणाननुभूय आधुनिकमहामहोपाध्यायानां गुणान् अनुसृत्य च बोद्धव्यम्। अस्मत्प्रतिवासिजामातृप्राङ्गणे अस्माकं प्रतिवासी यो जामाता तस्य प्राङ्गणे चत्वरे, यद्वा अस्मत्प्रतिवासिनाम् अस्मत्पल्लीस्थानां जनानां यो जामाता दुहितॄणां पतिः तस्य प्राङ्गणे,

मृतः तेन ब्रह्मबधेन व्याकुलीभूता वयमितस्ततो वेश्याप्राङ्गणे स्मार्त्तपण्डितमन्विष्यन्तो भवदन्तिकमागताः स्म। तदत्र कानि प्रायश्चित्तानि ? (य)

विश्व:। (स्मृतिमभिनीय स्वनासापुटेऽङ्गुलिं प्रदाय परमार्थतो निरूप्य आह)।

यदि स्वरूपं ब्राह्मणो मृतस्तदा तद्वनितायाः तत्सुतस्य वा मुखे गोमयजलं वह्निवर्णं कृत्वा प्रदीयतां तेन उभयोर्दिव्या गतिः। (र)

मिथ्या। (कर्णे स्वैरं) मक्षिकापादाघातेन न मृतः किन्तु रजक्यां रममाणः सर्वैः पौरजनैर्लोष्ट्रपातैर्हतः। (ल)

---

चतुर्वेदाध्यायी, वेदचतुष्टयाध्ययनतत्परः ब्रह्मचर्य्यनिपुणः ब्रह्मचारी संवत्सरस्नायी संवत्सरं व्याप्य स्नायी दीर्घस्नायी इत्यर्थः यद्वा संवत्सरम् अतिक्रम्य स्नायी वत्सरान्तस्नायीत्यर्थः। कश्चित् ब्राह्मणः मक्षिकापादाहतिक्षतदेहः, मक्षिकाणां पादाहत्या चरणाघातेन क्षतः क्षतः देहः शरीरं यस्य तादृशः सन् मृतः लोकान्तरं गतः। तेन ब्राह्मणबधेन ब्रह्महत्यया व्याकुलीभूताः अतीव कातराः सन्तः, इतस्ततः चतुर्दिक्षु इत्यर्थः वेश्याप्राङ्गणे वाराङ्गनाचत्वरे स्मार्त्तपण्डितं स्मृतिशास्त्राध्यापकम् अन्विष्यन्तः अन्वेषणं कुर्वन्तः वयं भवदन्तिकं भवत्समीपं आगताः स्म प्राप्ताः स्म, तत् तस्मात् अत्र ब्राह्मणबधकाण्डे कानि किं विधानि प्रायश्चित्तानि ? उच्यन्ताम् इति शेषः (य)।

स्मृतिमभिनीय स्मरणं नाटयित्वा स्वनासापुटे अङ्गुलिं प्रदाय अङ्गुलिना नासापुटं धृत्वा इत्यर्थः परमार्थतो निरूप्य, नयननिमीलनादिना यथार्थतो निश्चित्य आह। स्वरूपं सत्यं यदि ब्राह्मणः मृतः परलोकं गतः, तदा तर्हि तद्वनितायाः तस्य पत्न्याः तत्सुतस्य वा तत्पुत्रस्य वा मुखे गोमयजलं गोमयमिश्रितजलं वह्निवर्णम् अत्युष्णमिति यावत् कृत्वा प्रदीयताम् आवर्ज्यताम् तेन तज्जलप्रदानेन उभयोः ब्राह्मणस्य तत्पत्न्याश्च, ब्राह्मणस्य तत्पुत्रस्य वा दिव्या श्रेष्ठा गतिः भवेदिति शेषः (र)।

कर्णे स्वैरं श्रुतिसमीपे स्वैरं मन्दं यथा स्यात्तथाह मक्षिकापादाघातेन

विश्व:। तदा सर्वे निस्तीर्णा निर्मज्जनं कृत्वा नीयतां तेन पापेन रजकी विलिप्ता। (व)

मृषा। धन्यं पण्डितत्वम्। (श)

मिथ्या। [नायिकामवलोक्य।]

केनाराधि सरोरुहैः सुरनदीतीरे मृडानीश्वरः
केनाकारि च शम्बरारिचरणे भक्तिर्नितान्तं सदा।
केनाङ्गं सुरसिन्धुसिन्धुमिलने व्यामोचि निर्मोहितो
यस्यैषाङ्कमलङ्करिष्यति जगद्ग्रामोहिमूर्त्तिः क्षणम्॥ ४०॥

(पुनः सर्वानवलोक्य आत्मगतम्।)

वाराङ्गनालिङ्गनाय मम समागमः किन्त्वत्रैव धूर्त्तानां

---

धन्यं पण्डितत्वम् (श)।

---

मक्षिकाचरणप्रहारेण न मृतः, किन्तु रजक्यां रजकपत्न्यां रममाणः शृङ्गारपरायणः स ब्राह्मणः, सर्वैः पौरजनैः नगरवासिभिः कर्तृभिः लोष्ट्रपातैः लोष्ट्राणां पातैः उत्क्षेपणैः करणैः हतः व्यापादितः (ख)।

तदा तर्हि सर्वे निस्तीर्णाः पापात् मुक्ताः, तेन ब्राह्मणहत्याजनितेन पापेन विलिप्ता युक्ता रजकी, निर्मज्जनं कृत्वा, संशोध्य नीयताम् गृह्यताम्। (व)

अस्य पण्डितत्वं पाण्डित्यं धन्यं प्रशंसनीयम् (श)।

स्वस्य हृदयगतभावं प्रकटयति केनेति। केन जनेन सरोरुहैः पद्मैः सुरनदीतीरे गङ्गातीरे मृडानीश्वरः शिवः आराधि सम्पूजितः। केन वा शम्बरारिचरणे मदनचरणे सदा सर्वदा अविच्छेदेन इति यावत् नितान्तं निरतिशयं यथा स्यात्तथा भक्तिः मनोनिवेशः अकारि चक्रे। केन वा सुरसिन्धोः गङ्गायाः सिन्धुमिलने सागरसङ्गमे, गङ्गासागरसङ्गमे इत्यर्थः निर्मोहितः ज्ञानतः अङ्गं शरीरं व्यामोचि तत्यजे, गङ्गासागरसङ्गमे शरीरं त्यक्त्वा पुनर्जातः एवंविधः पुण्यवान् कः इति भावः। यस्य अङ्कं क्रोड़म् एषा जगद्ग्रामोहिमूर्त्तिः भुवनमोहिनी इत्यर्थः मृगाङ्कलेखा क्षणं क्षणकालं व्याप्य अलङ्करिष्यति शोभयिष्यति इत्यहं न जाने इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४०॥

मम समागमः आगमनं वाराङ्गनालिङ्गनाय वेश्याङ्गसङ्गार्थम्। किन्तु परन्तु

मेलकं न हि जलौकसाम् अङ्गे जलौकानां गतिः तदलमिहाव-
स्थानेन ( इति निष्क्रान्तः )। ( घ )

राजा। अधुनापि कथं नायातः साधुहिंसको दण्ड-
पालकः ? ( ङ )

(ततः प्रविश्य साधुहिंसकः किञ्चित् मुदमभिनीय) असिहत्त-
मोषएहिं ज्वेव सअलं णअरं व्याउलं हग्गे परमाणन्दिदो
गणिआसंदंसणत्थं आगदो ह्मि। ( छ )

राजा। (सभयं चिन्तामभिनीय) मन्त्रिन्! चौरेभ्यो महती
भीतिः किमिदानीम् करणीयम्। ( च )

मन्त्री। देव! सैन्यं सुसज्जीकृत्य प्रथमतो मम रक्षणं विधेयं
ततो देव्यास्ततः प्रासादस्य च। ( क )

---

असिहस्तमोषकैरेव सकलं नगरं व्याकुलीभूतं, परमानन्दितः गणिकासन्दर्श-
नार्थम् आगतोऽस्मि ( छ )।

---

अत्रैव कुट्टिन्याः चत्वरे, धूर्त्तानां शठानां मेलकं चक्रं, वर्त्तते इति शेषः। जलौकसां
रक्तपायिकीटविशेषाणाम् अङ्गे शरीरे न हि जलौकानां गतिः सङ्गः, तत् तस्मात्
इह धूर्त्तसङ्घशोभितसभायाम् अवस्थानेन अलं ? स्थितेः प्रयोजनं नास्ति इत्यर्थः (घ)।

अधुनापि इदानीमपि कथं कस्मात् न आयातः न आगतः साधुहिंसकः साधूनां
सत्पुरुषाणां हिंसकः इति अन्वर्थनामा दण्डपालः कश्चित् दुष्टात्मा दण्ड-
दाता इति यावत् ( ङ )।

असिहस्तमोषकैः खड्गधारिचौरैः, व्याकुलीभूतम् उत्पीड़ितम्। परमानन्दितः
परमाह्लादितः गणिकादर्शनार्थं वाराङ्गनामवलोकयितुम्, आगतोऽस्मि अहमवागतः
इत्यर्थः ( छ )।

मन्त्रिन्! हे अमात्य! कुमतिवर्मन्! चौरेभ्यः तस्करेभ्यः महती भीतिः महत्
भयम् उपस्थिता इति शेषः इदानीम् अधुना किं करणीयं ? किं विधेयम् ? ( च )।

देव! महाराज! सैन्यं सुसज्जीकृत्य सेनानिवेशं कृत्वा प्रथमतः प्राक् मम,

राजा। (सकष्टम्)।

रात्रौ तारकनायकेक्षणसुखान्यूर्ध्वं पिधानं विना
नित्यं जर्जरभित्तिपातभयतो देव्या समं जागरः।
यस्मिन् भेकरवागतोरगभयात् पाणौ सदैवौषधं
प्रासादः खलु तादृशः प्रथमतः संरक्ष्यतां चौरतः॥ ४१॥

हन्त! न जाने देव्याः कीदृशी गतिर्भविष्यति? (ख)

बन्धु। अज्ज मन्तिवर! किरिसी सा देई जं चिन्तअन्तो देओ विसीददि। (ग)

---

आर्य! मन्त्रिवर! कीदृशी सा देवी यां चिन्तयन् देवः विषीदति (ग)।

---

ततः पश्चात् देव्याः महिष्याः ततः तदनन्तरं प्रासादस्य सौधस्य च रक्षणं चौरतः रक्षा इति यावत् विधेयं कर्त्तव्यम् (क)।

रात्रौ इति। यस्मिन् प्रासादे पिधानम् आच्छादनं विना उपर्य्याच्छादनाभावादित्यर्थः। रात्रौ रजन्यां तारकनायकेक्षणसुखानि तारकनायकस्य उडुपतेः ईक्षणसुखानि दर्शनजनितसुखानि भवन्ति गृहाभ्यन्तरस्थितस्यापि चन्द्रदर्शनजनितसुखानि भवन्ति इत्यर्थः। तथा, जर्जरभित्तिपातभयतः जर्जरभित्तेः जीर्णदेहल्याः पातः पतनं तस्मात् भयं तस्मात् जीर्णदेहलीपतनभयात् इत्यर्थः। नित्यं प्रतिदिनं देव्या समं महिष्या सह जागरः जागरणं भवति। तथा भेकरवागतोरगभयात् मण्डूकध्वनिभिः आगता समायाताः ये उरगाः सर्पाः तेभ्यो यत् भयं तस्मात् भेकरवाहूतसर्पभयादित्यर्थः. पाणौ हस्ते सदैव सर्वदैव औषधं विषहारकं भैषज्यम् आस्ते इति शेषः। तादृशः पूर्वोक्तप्रकारः प्रासादः प्रथमतः प्राक् चौरतः तस्करात् संरक्ष्यताम् खलु, पश्चात् अन्येषां रक्षणं विधेयमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४१॥

हन्त इति खेदसूचकमव्ययम्। देव्याः महिष्याः कीदृशी गतिः अवस्था भविष्यति भवेत्, न जाने इत्यहं न अवैमि (ख)।

देवः महाराजः, विषीदति विषण्णो भवति (ग)।

मन्त्री। तद्गुणवर्णने अनन्त इव कः सहस्रमुखः ? । (घ)

बन्धु। अज्ञ तथावि सुणोमि। (ङ)

मन्त्री। भवतु त्वदुपरोधाद्वर्ण्यते संक्षेपेण।

दर्शेन्दुतुल्यवदनाञ्जनपुञ्जगौरी
मार्जारचारुनयना घटपीनमध्या।
प्रोत्तुङ्गपीनकुचचुम्बितनाभिदेशा
त्रैलोक्यमोहवसतिः खलु कामिनी सा ॥ ४२ ॥

---

आर्य ! तथापि शृणोमि ( ङ )।

---

तद्गुणवर्णने तस्याः गुणवर्णनायाम् अनन्त इव शेष इव, सहस्रमुखः सहस्रवदनः कः ? मनुष्यमध्ये कोऽपि नास्ति ? सहस्रवदनश्चेत् वक्तुं समर्थो भवेदिति भावः ( घ )।

तथापि तथा चेत् शृणोमि किञ्चित् श्रोतुमभिलषामि इति भावः ( ङ )।

दर्शेन्दुतुल्यवदना दर्शः अमावस्या तस्मिन् इन्दुः चन्द्रः तेन तुल्यं समं वदनम् आननं यस्याः सा यथा अमावस्यायां सर्वथैव चन्द्रस्य दर्शनाभावः, तद्वत् अस्याः आननस्य रात्रौ कृष्णवर्णाच्छन्नत्वात् दर्शनाभावः इति भावः। तथा अञ्जनपुञ्जगौरी कज्जलराशिवत् गौरी गौरवर्णा गौरीति परिहासोक्तिः कृष्णवर्णा इत्यर्थः। पुनः कीदृशी मार्जारचारुनयना मार्जारस्येव विड़ालस्येव चारुणी सुन्दरे नेत्रे यस्याः सा विड़ालाक्षीत्यर्थः। घटस्येव पीनः स्थूलः मध्यः कटिदेशो यस्याः सा अतिस्थूलमध्यदेशा इत्यर्थः, तथा प्रोत्तुङ्गपीनकुचाभ्यां अत्युच्चस्थूलस्तनाभ्यां चुम्बितः स्पृष्टः नाभिदेशो उदरस्य निम्नभागः यस्याः सा नाभिदेशपर्यन्तलम्बी-दुग्धमानातिपीवरकुचा इत्यर्थः खलु अतएव त्रैलोक्यमोहवसतिः त्रैलोक्यस्य भुवनस्य मोहवसतिः मोहाश्रयः भुवनमोहिनी इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ४२ ॥

बन्धु। भट्टो महीबालो बिअड्ढाणां अग्गगणो अबिअ तुमं कइ चूड़ामणी। (च)

मन्त्री। देव! चौरभीतिर्महती, पतितः संग्रामसमयः, तत् कथं नाहूयते रणजम्बूकः सेनापतिः? (छ)

(प्रविश्य रणजम्बूकः परिक्रम्य सगर्वं) देओ सुणीअदु अह्माणं बीरत्तणम्। (ज)

राजा। (प्रकाशं) कथय।

रण:। देअ! अज्ज मए रत्तपुप्फरसं पिअन्ती अवलोइदा। (झ)

राजा। ततः?

रण:। तदो सत्तरं अङ्गे तणुत्तं णिवेसिअ खत्तियचउट्टएण समं अत्थं धारिअ थुलचम्मरज्जुएहिं आकड्ढिदा। (ञ)

---

भट्टो महीपालः विदग्धानाम् अग्रगख्यः। अपिच त्वं कविचूड़ामणिः (च)।

देव! अद्य रक्तपुष्परसं पिबन्ती अवलोकिता (झ)।

ततः सत्वरम् अङ्गे तनुत्रं निवेश्य क्षत्रियचतुष्टयेन समम् अस्त्रं धृत्वा स्थूल-चर्मरज्जुभिः आकृष्टा (ञ)।

---

भट्टः साधुः महीपालः भूपतिः विदग्धानां रसिकानाम् अग्रगख्यः अग्रणीः, त्वमपि च कविचूड़ामणिः पण्डितशिरोरत्नः (च)।

देव! महाराज! महती चौरभीतिः अतीव चौरभयं, सुतरां संग्रामसमयः युद्धकालः पतितः समायातः तत् तस्मात् कथं रणजम्बूकः रणे जम्बूकः शृगाल इव पलायनतत्परः इति अन्वर्थनामा सेनापतिः न आहूयते? न आकार्य्यते? (छ)।

देव! श्रूयताम् अस्माकं वीरत्वम् (ज)।

देव! हे महाराज! मया रक्तपुष्परसं रक्तवर्णपुष्पस्य रसं मधु पिबन्ती आस्वादयन्ती मधुपानं कुर्वती इत्यर्थः अवलोकिता दृष्टा, भ्रमरीति शेषः (झ)।

ततः तदनन्तरं सत्वरं शीघ्रम् अङ्गे शरीरे तनुत्रं वर्म निवेश्य सन्नह्य देहं

राजा। सङ्घर्षं ततः ?

रणः। तदो तीक्खखग्गपहारेण चम्मकोसत्तणं णीदा। (ट)

राजा। तत्र कः सन्देहो नागायुतबलोऽसि। (ठ)

मन्त्री। भोः सेनापते ! पतितः संग्रामसमयः, तव साहसः कीदृशः ? (ड)

रणः। (प्रस्फुटं संस्कृतमाश्रित्य)।

सद्यो दत्तमलक्तकं पदयुगे दृष्ट्वाङ्गनाया रतौ,
रक्तभ्रान्तिवशाद्भयेन नितरां ग्लानेन्द्रियो मेदिनीम्।
पश्यन् दर्शनिशातमिस्रनिकरच्छन्नामिवाशां तथा,
मूर्च्छेयं भुवि का कथा समरतो रक्तास्यसक्ताद्विषाम् ? ॥४३॥

---

ततः तीक्ष्णखड्गप्रहारेण चर्मकोषत्वं नीता (ट)।

---

चर्मावृतं कृत्वा इत्यर्थः। चत्रियचतुष्टयेन चतुर्भिः योद्धृभिरित्यर्थः समं सह अस्त्रं धृत्वा धनुर्वाणादिकं गृहीत्वा स्थूलचर्मरज्जुभिः पीवरचर्मनिर्मितरज्जुभिः आकृष्टा स्वसमीपमानीता सा इति शेषः (ञ)।

निशितखड्गाघातेन चर्मकोषत्वं नीता शिरश्छेदनात् चर्मकोषत्वं नीता प्रापिता शरीरम् चर्मनिर्मितकोषवत् अकारि इत्यर्थः (ट)।

तत्र, तव वीरत्वे कः सन्देहः ? कोऽपि सन्देहो नास्ति, यतः, नागायुतबलोऽसि दशसहस्रगजानां वीर्य्यमिव ते वीर्य्यम् इति भावः (ठ)।

भो सेनापते ! हे रणजम्बूक ! इति यावत् संग्रामसमयः युद्धकालः पतितः समायातः, तव साहसः युद्धक्रियायाम् उत्साहः कीदृशः ? कीदृक् आस्ते इति शेषः (ड)।

युद्धक्रियायां साहसत्वं वर्णयति सद्य इति। रतौ सुरतसमये अङ्गनायाः रमण्याः पदयुगे चरणयुगले दत्तम् अर्पितम् अलक्तकं लाक्षारागं दृष्ट्वा अवलोक्य रक्तभ्रान्तिवशात् शोणितभ्रमवशात् भयेन भीत्या नितरां निर्दातशयं यथा तथा ग्लानेन्द्रियः विह्वलः सन् दर्शनिशाया अमारजन्याः तमिस्रनिकरैः अन्धकारसमूहैः गाढान्धकारैरित्यर्थः छन्नाम् आवृतामिव मेदिनीं धरां तथा

मृगा । (उच्चैर्हसति) ।

रत्ना । (सक्रोधं) आः पामरि गणिए ! मं उअहससि ता कुण मए समं समलं । (ढ) (इति रोषं नाटयति ।)

(प्रविश्य प्रतीहारः संस्कृतमाश्रित्य)

देव ! महायात्रिको नाम सांवत्सरिको द्वारि वर्त्तते । (ण)

राजा । प्रवेशय ।

प्रती । (तथा करोति) ।

(प्रविश्य महायात्रिकः पञ्जिकां प्रसार्य्य दक्षिणाभिमुखः पठति) ।

भवे भवतु भास्करः सुरगुरुस्तथा रन्ध्रगः
खरांशुतनयोऽष्टमः सपदि मेदिनीनन्दनः ।

---

आः पामरि ! गणिके ! माम् उपहससि तत् कुरु मया समं समरम् (ढ) ।

---

तदन्धकारावृतां आशां दिशञ्च पश्यन् अवलोकयन् सद्यः तत्क्षणात् भुवि धरायां मूर्च्छयं चैतन्यशून्योऽभवं रक्तास्यसक्तद्विषां रक्तास्यसक्ताः रक्तवर्णवदनविशिष्टाः ये द्विषः शत्रवः तेषां समरतः संग्रामे का कथा ? किमुत वक्तव्यम् ? समरे रक्तवर्णमुखयुक्तान् शत्रून् दृष्ट्वा मम किं भवेत् तन्न जाने इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४३ ॥

आः इति कोपसूचकमव्ययम् । पामरि ! पापिष्ठे ! गणिके ! रे वारविलासिनि ! माम् उपहससि विड़म्बयसि, तत् तस्मात् मया समं सह, समरं युद्धं कुरु, त्वया सह अहं युद्धं करोमीति भावः (ढ) ।

प्रतीहारः द्वारपालः । महायात्रिकः महायात्रायां मरणं वदति यः सः इति अन्वर्थनामा, सांवत्सरिकः संवत्सरस्य फलं वदति यः सः दैवज्ञः इत्यर्थः द्वारि द्वारदेशे, वर्त्तते तिष्ठति (ण) ।

भवे इति । तव इति ऊहनीयम् तव भवे जन्मनि जन्मराशौ इति यावत् भास्करः आदित्यः भवतु तिष्ठतु । तव जन्मराशिस्थितः सन् स्थाननाशं करोतु इति भावः । जन्मराशिस्थितस्यादित्यस्य फलं ज्योतिःशास्त्रेषु उक्तं यथा—"स्थानं जन्मनि नाशये-

दिनेशगृहसंगत: स खलु सैंहिकेयो बली
फलं किमपरै: पुन: शशिकवीन्दुजातैर्ग्रहै: ?॥ ४४ ॥

मन्त्री । श्रुत: शुभाशीर्वाद: सम्प्रति संग्रामार्थी देव: तत् क्रियतां महायात्रायाः क्षण: । (त)

महा। पूर्णिमासंयुक्तशनैश्चरवारे श्रवणानक्षत्रे वृश्चिक-लग्ने प्रात: समये देवस्य महायात्रा भविष्यति (थ)।

---

दिनकर:” इत्यादि। सुरगुरु: बृहस्पति: तद्वत् जन्मराशौ तिष्ठतु, जन्मराशिस्थित: सन् भयं विदधातु इति भाव:, तथाचोक्तं “भयं जन्मन्यार्थ्यौ जनयति” इत्यादि। तथा खरांशुतनय: खरांशो: सूर्य्यस्य तनय: पुत्र:, शनैश्चर:, रन्ध्रग: तव जन्म-राश्यपेक्षया अष्टमगृहगतो भवतु, अष्टमगृहगत: सन् शरीरपीड़ां करोतु इति भाव:, तथाचोक्तं “शरीरपीड़ां निधने” इत्यादि। तथा मेदिनीनन्दन: कुज: सपदि तत्क्षणात् अष्टम:, तव जन्मराश्यपेक्षया अष्टमगृहगतो भवतु निधनगृहगत: सन् तवोपरि शस्त्रवृष्टिं विदधातु इति भाव:। तथाचोक्तं “जनयति मरणस्थ: शस्त्रधारां धराज:” इत्यादि। स प्रसिद्ध: बली बलवान्, पूर्णदृष्टिरिति यावत् सैंहिकेय: राहु: दिनेशगृहसंगत: तव जन्मराश्यपेक्षया द्वादश-गृहगत: अन्त्यगृहगत: इति यावत् भवतु, अन्त्यगृहगत: सन् अर्थक्षयादीनि जनयतु इति भाव:। तथाचोक्तं “जन्मान्तपञ्चनवरन्ध्रचतुर्द्विसप्तराशौ स्थितो यदि भवेदसुर: कदापि। अर्थक्षयं रिपुभयं बहुकार्य्यहानिं रोगप्रवासमरणाग्निभयं करोति”। एवं चेत् अपरै: अन्यै: शशिकवीन्दुजातै: चन्द्रशुक्रबुधग्रहै: अन्यत् पुन: किं फलं भवेत् पूर्वोक्तादित्यादि ग्रहपञ्चकानां फलस्यापेक्षया एतेषां चन्द्रशुक्रबुधग्रहाणां फलम् अकिञ्चित्करम् अत: एतेषां फलापेक्षापि नास्तीति भाव:। पृथ्वीवृत्तम् ॥४४॥

शुभाशीर्वाद: मङ्गलाशीर्वाद:, सम्प्रति इदानीं संग्रामार्थी समरप्रार्थी देव: महाराज: तत् तस्मात् क्रियताम् अवधार्य्यतां महायात्राया: अपुनरागमनस्य क्षण: समय: महाराज: कदा गमिष्यति तस्य समय: निरूप्यताम् इति भाव: (त)।

पूर्णिमासंयुक्तशनैश्चरवासरे पापयोगादियुक्तदिवसे तथाचोक्तं “शनौ पूर्णा च पापदा” (थ)।

कल्ह:। ता एत्थ मरणं जाअदि ( द )।

मल्ह। प्रजानामापदं नीत्वा यातु नाम (ध)।

विश्व:। (पूर्वां पश्चिमां दिशञ्चावलोक्य)।

भानुविम्बमिद मस्तगामि च प्रोद्यतं कुमुदबन्धुमण्डलम्।
दृश्यते रतिपते: प्रवासिनां क्रोधरक्तमिव लोचनद्वयम् ॥४५॥

(नायिकामवलोक्य सकामम्) वत्स कलहाङ्कुर! प्रवृत्त: सन्ध्यासमय: तदस्या: कर्णे स्वैरं भण यथा मया सार्द्धं निभृतमस्माकं सन्ध्या निर्वहति ( न )।

---

तदत्र मरणं जायते ( द )।

---

अत्र दिवसे गमनात् मरणं मृत्यु: जायते भवति ( द )।

प्रजानां लोकानाम् आपदं नीत्वा संगृह्य यातु गच्छतु, अस्या अवस्थानेन लोकाना केवलमापत् भविष्यति इति भाव: ( ध )।

सन्ध्यां वर्णयति भानुविम्बमिति। इदं प्रत्यक्षदृश्यमानं भानुविम्बं सूर्य्यमण्डलम् अस्तगामि अस्ताचलचूडावलम्बि च. एवं कुमुदबन्धुमण्डलं चन्द्रविम्बं प्रोद्यतम् उदितम्, उदयास्तसमये उभयोरपि रक्तवर्णत्वं जायते, अत उत्प्रेक्षते प्रवासिनां नायिकासमीपगमनविमुखानां पान्थानां सम्बन्धे रतिपते: मदनस्य क्रोधसंरक्तं क्रोधेन कोपेन संरक्तं रक्तवर्णं लोचनद्वयं नयनद्वयमिव दृश्यते अवलोक्यते सन्ध्या उपस्थिता रात्रिरागमिष्यति इदानीमपि अत्र स्थित्वा किं क्रियते गृहे गम्यताम् इति अभिप्रेत्य रतिपति: सूर्य्यचन्द्रमण्डलरूपेण क्रोधसंरक्तलोचनद्वयेनेव पान्थान् प्रति अवलोकयतीति भाव:। रथोद्धतावृत्तम् ॥ ४५ ॥

वत्स! कलहाङ्कुर! सन्ध्यासमय: सन्ध्योपासनाकाल: प्रवृत्त: उपस्थित: तत् तस्मात् अस्या: नायिकाया: कर्णे श्रवणसमीपे स्वैरं मन्दं यथा स्यात्तथा भण कथय यथा येन प्रकारेण मया सार्द्धं सह निभृतं यथा तथा अस्माकं सन्ध्या सन्ध्योपासना निर्वहति निष्पद्यते, "त्वया सह निर्जने सन्ध्योपासनां कर्त्तुमस्माकमभिलाष: वर्त्तते" इति तां कथय इति भाव: ( न )।

कलः। (आकर्ण्यात्मगतम्)। संस्कृतमाश्रित्य दुष्टोऽयम् उपाध्यायः तरुणीं रन्तुकामः (प)।

अपिच।

किं मे सद्गुरुसेवनैः प्रतिदिनं? किं व्योमधामार्चनैः?
किं स्यादध्ययनेन वा? सुरपुरप्राप्त्याथवा किं फलम्?।
एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्भव-
स्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि॥ ४६॥

भवतु तत् अलं विलम्बेन, कथमेषा निर्भरमालिङ्ग्य न चुम्ब्यते (फ)।

(उपसृत्य प्रकाशं) मिअङ्कलेहे! किम्पि जल्पिदुमिच्छेमि (ब)।

---

मृगाङ्कलेखे! किमपि जल्पितुमिच्छामि (ब)।

---

दुष्टः मन्दात्मा अयम् एषः, उपाध्यायः अध्यापकः, तरुणीं युवतिं रन्तुकामः लभितुमिच्छति इत्यर्थः (प)।

अपि च आत्माभिलाषं विवृणोति किं मे इति। प्रतिदिनं प्रत्यहं मे मम सद्गुरुसेवनैः सदाचार्य्यपरिचर्य्याभिः किं फलं? किमपि फलं नास्तीति भावः। वा अथवा व्योमधामार्चनैः व्योम्नि नभसि धाम तेजः आश्रयो वा यस्य तस्य सूर्य्यस्य अर्चनैः आराधनैः सूर्य्योपासनाभिरित्यर्थः किं फलं स्यात्? भवेत् किमपि न भवेदित्यर्थः। अध्ययनेन वेदाभ्यासेन वा किं फलम्? अथवा सुरपुरप्राप्त्या सुरपुरस्य स्वर्गस्य प्राप्त्या लाभेन किं फलं भवेत्? यदि अधुना एतस्याः मृगाङ्कलेखायाः कुचकुम्भयोः उत्तुङ्गस्तनकलसयोः निर्भरपरीरम्भप्रभावेण गाढालिङ्गनबलेन उद्भवैः उत्पन्नैः स्वेदाम्भोभिः घर्मजलैः अनङ्गवह्निः मदनानलः नो निर्वापितः निर्वाणतां न गच्छेत्। एतस्यां रममाणस्य इन्द्राण्युपभोगादिरूपस्वर्गफलमपि अकिञ्चित्करमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ४६॥

विलम्बेन चिरेण अलं विलम्बस्य प्रयोजनं नास्ति इत्यर्थः कथं न, केन वा न, एषा मृगाङ्कलेखा निर्भरं गाढं यथा स्यात्तथा आलिङ्ग्य परिष्वज्य न चुम्ब्यते ओष्ठाधराभ्यां न आस्वाद्यते (फ)।

किमपि किञ्चित् जल्पितुं कथयितुम् इच्छामि अभिलषामि (ब)।

मृगा। जइ जुत्तं ता कधं ण भणासि (भ)।

कल:। ( संस्कृतमाश्रित्य )

तारुण्यं दिवसानि पञ्च दश वा पीनस्तनोत्तम्भनं
नो जातं पुनरित्यहो ! विधुमुखि ! प्राणास्तु न स्थायिनः।
ज्ञात्वैवं समुपेक्ष्यतेऽभ्युपगतो यद्वामदृष्ट्या युवा
न स्थैर्य्यं कुचयोर्हृदि स्थिरतरं जागर्त्ति शल्यं हि तत् ॥४७॥

मृगा। [ किञ्चित् स्मयति। ]

कल:। मिअङ्कलेहे ! किम्पि रहस्सं जप्पेमि। सुणादु भोदी (म)।

---

यदि युक्तं तत् कथं न भणसि ( भ )।

मृगाङ्कलेखे ! किमपि रहस्यं जल्पामि शृणोतु भवती (म)।

---

यदि युक्तम् उचितं चेत् कथं केन वा न भणसि कथयसि ( भ )।

जल्पन विज्ञपयति तारुण्यमिति। विधुमुखि ! चन्द्रानने ! तारुण्यं यौवनं पञ्च, दश दिवसानि दिनानि व्याप्य स्थास्यति इति शेषः। इति एवं चेत् अहो ! इति खेदसूचकमव्ययम्। पीनस्तनोत्तम्भनं पीनस्तनयोः पीवरकुचयोः उत्तम्भनम् उन्नतिः नो जातम् यौवने अतीते पीवरकुचयोः पतनात् परं कदा कस्याः अपि पुनरुन्नतिः न अभवत् अतः तवापि इह जन्मनि पुनरुन्नतिर्न भविष्यति इति भावः। तु पुनः प्राणाः न स्थायिनः स्थितिशीलाः, प्राणनिर्यानमनु अवश्यं भवेत्। एवं जीवनयौवनादीनाम् अस्थिरत्वं ज्ञात्वा अवेत्य, अभ्युपगतः रिरंसया उपस्थितः युवा युवकः यत् यस्मात् वामदृष्ट्या वामनयनया रमण्या, उपेक्ष्यते परित्यज्यते तत् तस्मात् युवकपरित्यागजनितपापात्, इत्यर्थः तस्याः वामनयनायाः कुचयोः पीनस्तनयोः स्थैर्य्यं स्थिरत्वं हृदि मनसि स्थिरतरं निश्चलं शल्यमिव न जागर्त्ति न प्रकाशते अपि तु जागर्त्त्येव, उपेक्षितयुवकायाः कामिन्याः यावत् कुचयोः स्थिरत्वं वर्त्तते तावदेव शल्यमिव सर्वेषां मनसि क्लेशं ददाति इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४७ ॥

किमपि किञ्चित्, रहस्यं गोप्यं, जल्पामि भणामि (म)।

(इति श्रुतिमूले मिलित्वा निर्भरमालिङ्ग्य उच्चैश्चुचुम्ब संस्कृतमाश्रित्य) (य)।

स्वादितं सुदृशनच्छदसीधु नामरैर्विधुरबुद्धिभिरस्याः।
यद्विधुन्तुदमुखादवशिष्टः पीयते प्रमुदितैर्हरिणाङ्कः॥ ४८॥

विश्वः। (सक्रोधं) अरे पामर वटो! मत्काङ्क्षितां नायिकामालिङ्गसि चुम्बसि च अतः प्रायश्चित्ती त्वम् (र)।

कलः। अहं ण तुमं, जदो सिस्सालिङ्गिदां णाइआं मक्काङ्क्षिदां जप्पेसि (ल)।

---

अहं न त्वं, यतः शिष्यालिङ्गितां नायिकां, मत्काङ्क्षितां जल्पसि (ल)।

---

श्रुतिमूले कर्णमूले मिलित्वा संगत्य, निर्भरं गाढम् आलिङ्ग्य परिष्वज्य उच्चैः सशब्दं चुचुम्ब, संस्कृतम् आश्रित्य, गीर्वाणवाण्या आह च इत्यर्थः (य)।

स्वादितमिति। अस्याः मृगाङ्कलेखायाः सुदृशनच्छदसीधु सुन्दरीष्ठाधरामृतं विधुरबुद्धिभिः, "अत एतादृशममृतं नास्ति वयं किं कुर्मः, बहुप्रार्थनयापि न प्राप्स्यामः" इति चिन्तया दुःखितान्तःकरणैः सद्भिरित्यर्थः। अमरैः देवैः न स्वादितं न उपभुक्तम्। यत् यस्मात् एतादृशसुन्दरीष्ठाधरामृतस्य अलाभात् इत्यर्थः। "अस्माकम् एष एव सुहृः", इति निश्चित्य प्रमुदितैः सद्भिरिति यावत् विधुन्तुदमुखात् विधुन्तुदो राहुः तस्य मुखात् वदनात् अवशिष्टः भ्रष्टः उच्छिष्टः इति यावत् हरिणाङ्कः सुधांशुः पीयते आस्वाद्यते कदाचित् अस्याः अधरसुधालाभश्चेत् तर्हि अमराणां राहूच्छिष्टे अमृतमये शशिनि एतादृशी प्रीतिः न स्यात् इति भावः। स्वागतावृत्तम्॥ ४८॥

अरे इति नीचसम्बोधनम्। पामर। पापिष्ठ। वटो! ब्राह्मण! मत्काङ्क्षितां मत्प्रार्थितां नायिकां मृगाङ्कलेखाम् आलिङ्गसि परिष्वजसे चुम्बसि अधरसुधारसं पिबसि, अतः उपाध्यायोपभोग्यायां यथेष्टाचरणात् इत्यर्थः त्वं प्रायश्चित्ती प्रायश्चित्तार्हः (र)।

अहं न, त्वं प्रायश्चित्तार्हः इति शेषः। शिष्यालिङ्गितां छात्रपरिष्वक्तां छात्रोपभुक्तामित्यर्थः; नायिकां, मत्काङ्क्षितां मदभिलषितां जल्पसि भाषसि (ल)।

विष्व:। यस्याङ्गस्य योगाद् गजो हस्तीत्युच्यते तदभिधान-मङ्गं तव छेद्यं भवति येन गुरुवाञ्छिता नायिका स्पृष्टा (व)।

कल:। अङ्गणाजहणरञ्जणणामहेअं अङ्गं तुह विच्छेज्जं भोदि जेण सिस्सपरिचुम्बिदां णाइकां सवाञ्छिदां जप्पेसि (ग्र)।

विष्व:। अधरो यस्याच्छादनं तस्योत्पाटनं युक्तं येन अस्या अधर: पीड़ित: (व)।

---

अङ्गनाजघनरञ्जननामधेयम् अङ्गं तव विच्छेद्यं भवति येन शिष्यपरिचुम्बितां नायिकां स्ववाञ्छितां जल्पसि (ग्र)।

---

यस्य अङ्गस्य अवयवस्य हस्तस्य इति यावत् योगात् सम्पर्कात् गज: हस्ती इति उच्यते हस्तोऽस्य अस्तीति व्युत्पत्त्या नाम्ना हस्ती इति निगद्यते इत्यर्थ:। तव तदभि-धानं तन्नामकम् अङ्गम् अवयवं हस्तं इति यावत् छेद्यं कर्त्तनीयं भवति येन अङ्गेन हस्तेन इति यावत् गुरुवाञ्छिता गुरुकाङ्क्षिता नायिका रमणी स्पृष्टा, त्वया आलि-ङ्गनाय हस्तेन आक्रष्टा इत्यर्थ: (व)।

अङ्गनाजघनरञ्जननामधेयम् अङ्गनानां कामिनीनां जघनं नितम्बं रञ्जयति तत्र नियतार्पणेन शोभयति येन, तत् नामधेयं नाम यस्य तत् अङ्गं रमणीनितम्ब-देशे निरन्तरशोभि वदनमित्यर्थ: तत् विच्छेद्यं विकर्त्तनीयं यत् वदनं रमणीनितम्ब-देशे अर्पयित्वा सर्वदैव तिष्ठसि तत् वदनं विकर्त्तनीयमिति भाव:। येन अङ्गेन अङ्गनाजघनरञ्जननामधेयेन वदनेन इति यावत्, शिष्यपरिचुम्बितां छात्रेण आस्वा-दितां नायिकां स्ववाञ्छितां स्वकाङ्क्षितां जल्पसि भवसि (ग्र)।

अधर: ओष्ठ: यस्य आच्छादनम् आवरणं तस्य उत्पाटनं पातनं दन्तोत्पाटनम् इति यावत् युक्तम् उचितं, येन दन्तेन इत्यर्थ: अस्या: नायिकाया: अधर: पीड़ित: दंशित: (व)।

काल:। लिगि प्पेरणेति धातुणो रच् पच्चएण जं रूवं सिद्धं भोदि तुह तस्स उप्पाटणं जोग्गं जेण सिस्सचुम्बिदा णाइआ पेच्छसि (स)।

(इति अन्योन्यं कलहं कुर्वाणौ नृत्यत: सर्वे हसन्ति)।

[नेपथ्ये वैतालिक:।] शुभसन्ध्यासमयोऽस्तु दिवसस्य (ह)।

गाढं प्रौढाङ्गनाभि: सुरतरतमन: सम्मदोत्सारिताक्षम्
मुग्धाभिस्त्रस्तनेत्रं रतिसमरभयं चिन्तयन्तीभिरेवम्।
पान्थानामङ्गनाभि: ससलिलनयनं शून्यचित्ताभिरुच्चै:
कष्टं दृष्टोऽस्तशैलं भ्रमसजदयं मण्डलखण्डरश्मि: ॥४९॥

---

लिगि प्रेरणे इति धातो रच् प्रत्ययेन यद्रूपं सिद्धं भवति तव तस्य उत्पाटनं योग्यं येन शिष्यचुम्बितां नायिकां पेक्ष्यसि (स)।

---

लिगि धातो: अच् प्रत्ययेन यद्रूपं सिद्धं, भवति "लिङ्गम्" इति भवति, तव तस्य लिङ्गस्य उत्पाटनम् उन्मूलनं योग्यम् उचितं येन लिङ्गेन कारणेन शिष्यचुम्बितां शिष्यास्वादितां नायिकां रमणीं पेक्ष्यसि पेषणं करिष्यति इत्यर्थ:। यत: शिष्यास्वादितां रमणीं लिङ्गप्रेरणेन उत्पीड़यिष्यसि, अत: तव लिङ्गच्छेदनं विधेयमिति भाव: (स)।

वैतालिक: स्तुतिपाठक:। शुभसन्ध्यासमय: शुभसन्ध्याकाल:, अस्तु भवतु (ह)।

तं वर्णयति गाढेति। गाढं यथा स्यात् तथा प्रौढाङ्गनाभि: अतिशयसुरतगर्वितप्रवीणरमणीभि:, सुरते शृङ्गारे रत: यो मन:सम्मद: मनसो गर्वस्तेन उत्सारिते इतस्तत: विक्षिप्ते अक्षिणी नयने यस्मिन् तत् यथा स्यात्तथा कदा सूर्योऽस्तमेष्यति अहं शृङ्गारेण नायकं जेष्यामि इति गर्वेण इतस्तत: विक्षिप्तनयनं यथा तथा इति भाव:। एवं तथा रतिसमरभयं रतिसमरे सुरतसंग्रामे भयं, नायकेन पराभविष्यामि इति भयं चिन्तयन्तीभि: ध्यायन्तीभि: मुग्धाभि: नवनायिकाभि: त्रस्तनेत्रं चकितनयनं यथा तथा, तथा शून्यचित्ताभि: कातरान्त:करणाभि: कान्तविरहेण शून्यमयं जगत् अवलोकयन्तीभिरित्यर्थ:। पान्थानां प्रवासिनां अङ्गनाभि:

अपिच।

गतवति दिननाथे पश्चिमक्ष्माधरान्तम्
शिशिरकरमयूखैर्निर्भरं दह्यमाना।
परिहृतमिलितालिः पान्थकान्तेव दीना
सपदि कमलिनीयं हास्यहीना बभूव॥ ५०॥

अपिच। द्वितीयो वन्दी।

क्वैतत् मार्त्तण्डविम्बं ? सरसि सरसिजश्रेणिहास्यं क्व यातं ?
क्वैते याता रथाङ्गाः ? सपदि गतश्रियः क्व प्रविष्टा मरालाः ?।
सन्ध्यारागारुणाङ्गः कुपित इव पतिः प्रोद्यतोऽयं हिमांशुः
मन्ये हर्षादिवेयं हसति कुमुदिनी जाग्रती वालिनादैः॥५१॥

---

विरहिणीभिरित्यर्थः। ससलिलनयनं कान्तः कदा आगमिष्यति इति चिन्तया सजलनयनं यथा स्यात्तथा उच्चैःकष्टम् अतिक्लेशं यथा तथा दृष्टः अवलोकितः सन् अथ चण्डरश्मेः सूर्य्यस्य मण्डलः विम्बम् अस्तशैलम् अस्ताचलं भजम् असजत् समगच्छत लोकानां नयनपथमत्यजत् इत्यर्थः। स्रग्धरावृत्तम्॥ ४९॥

गतेति। दिननाथे दिनमणौ पश्चिमक्ष्माधरान्तं पश्चिमाचलम् अस्ताचलमिति यावत् गतवति याते सति दिनमणौ अस्ताचलचूड़ावलम्बिनि सति इत्यर्थः, इयं प्रत्यक्षपरिदृश्यमाना नलिनी पद्मिनी, दीना दुःखिता पान्थकान्ता पान्थरमणी इव शिशिरकरमयूखैः चन्द्रकिरणैः निर्भरं निरतिशयं यथा तथा दह्यमाना मलिना, अन्यत्र कान्तविरहेण क्लिश्यमाना, परिहृतमिलितालिः परिहृताः परित्यक्ताः मिलितालयः संसक्तभ्रमराः यया सा, अन्यत्र परिहृताः परित्यक्ताः मिलितानां सहचरीणाम् आलयः श्रेणयः यया सा सहचरीगणमपि परित्यज्य निर्जने कान्तं चिन्तयन्ती इति भावः। सपदि सहसा हास्यहीना प्रकाशरहिता अन्यत्र हर्षशून्या बभूव संवृत्ता सायंकाले यथा पान्थरमण्याः दशा सञ्जाता तथा पद्मिन्या अपि इति शेषः। मालिनीवृत्तम्॥ ५०॥

पुनः सायंकालं वर्णयति क्वेति। एतत् अधुना दृश्यमानं मार्त्तण्डविम्बम् आदित्यमण्डलं क्व कुत्र ? गतम् इति शेषः। तथा सरसि सरोवरे सरसिजश्रेणीनां

अपिच ।

स्वर्धामामृतपानचारुचषकं ? किं कामदेवाङ्गना-
क्रीड़ाकन्दुक एष ? किं सुरनदीडिण्डीरपिण्डः किमु ? ।
किं छत्रं स्मरभूपतेः ? किमु यशःपुञ्जं पुरस्तादिदं ?
चेतःसंशयकारकं समुदितं शीतद्युतेर्मण्डलम् ॥ ५२ ॥

मन्त्री । प्रवृत्तः सन्ध्याकालः तत् कथं नित्यक्रियायै न गम्यते (च) ।

---

कमलराजीनां हास्यं विकाशः क ? कुत्र यातं गतम् । तथा एते, ये सम्प्रति कूजन्ति, रथाङ्गाः चक्रवाकाः पक्षिविशेषाः क कुत्र ? याताः गताः, गतह्रियः परिहृतलज्जाः अधुना त्यक्तलज्जाः सन्तः ये क्रीड़न्ति ते इत्यर्थः, मरालाः हंसाः क ? कुत्र प्रविष्टाः अन्तर्हिताः, सन्ध्यारागेण सन्ध्याकालजनितरक्तवर्णेन अरुणाङ्गः रक्तमूर्त्तिः, अन्यत्र सन्ध्यारागेण सन्ध्यासमये सदाचाररहितायाः कान्तायाः शासननिमित्तकोपेन इत्यर्थः अरुणाङ्गः रक्तवर्णशरीरः, कुपितः क्रुद्धः पतिरिव नायक इव, अयं हिमांशुः शीतरश्मिः प्रोद्यतः उदितः अन्यत्र समायातः, तथा इयं कुमुदिनी, अलिनादैः भ्रमरध्वनिभिः जाग्रती गतनिद्रा सती हर्षात् हर्षं मुदं प्राप्य, "ल्यप्लोपे पञ्चमी" हसति इव, इति च अहं मन्ये तर्कयामि । स्रग्धरावृत्तम् ॥ ५१ ॥

स्वरिति । पुरस्तात् अग्रे समुदितं प्रोद्यतम् इदं शीतद्युतेः शीतरश्मेः मण्डलं बिम्बं चेतसः सन्देहजनकं भवति इति शेषः । कस्तावत् सन्देहः तं विवृणोति । इदं किं स्वर्धामानां स्वर्गवासिनाम् अमृतपानाय सुधास्वादनाय चारुचषकं सुन्दरपानपात्रं ? किंवा कामदेवाङ्गनायाः रत्याः क्रीड़ाकन्दुकः क्रीड़ार्थं लोष्ट्राकृतिक्रीड़नद्रव्यविशेषः, एषः ?, किमु किं भो सुरनद्याः गङ्गायाः डिण्डीरपिण्डः फेनराशिः एषः ?, किंवा स्मरभूपतेः अनङ्गराजस्य इदं छत्रं ? किमु किं भो इदं यशःपुञ्जं ? यशोराशिः ? । शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

प्रवृत्तः उपस्थितः, तत् तस्मात् कथं केन हेतुना नित्यक्रियायै सायंकालोचितनित्यक्रियार्थम् ( च ) ।

राजा। किं तेन चौरचक्रभयात् चिन्ताकुलोऽस्मि, भवतु तथापि यास्यामि क्षणं विरम दृश्यता मनयोर्गुरुशिष्ययोर्विरोधः (क)।

विश्व:। [दण्डहस्तः सामर्षं धावति] (ख)।

कल:। [उच्चैः शीत्कृत्य सर्वाङ्गं पुलकयति] (ग)।

(ततोऽन्योन्यं नायिकाञ्चलं गृहीत्वा मम इयम् इति उच्चार्य्य कलहायमानौ नृत्यतः (घ)।

बन्धु। (पुरः परिक्रम्य) अज्ज भअवं! चिट्ठदु अज्ज कलहो, समीअवट्टिणी रअणी वट्टदि पत्तुसहोमात्थं मअणान्धमिस्सो आगमिस्सदि सो क्खु जं आदिसदि तं कादव्वं (ङ)।

---

आर्य्य! भगवन्! तिष्ठतु अद्य कलहः। समीपवर्त्तिनी रजनी वर्त्तते, प्रत्यूषहोमार्थं मदनान्धमिश्रः आगमिष्यति स खलु यदादिशति तत् कर्त्तव्यम् (ङ)!

---

किं तेन? नित्यकर्मणा किं भवेत्? चौरचक्रभयात् तस्करमण्डलभयात् चिन्ताकुलोऽस्मि उत्कण्ठितोऽस्मि, क्षणं विरम तिष्ठ दृश्यताम् अवलोक्यताम् अनयोः गुरुशिष्ययोः छात्राध्यापकयोः विरोधः विवादः (क)।

दण्डहस्तः सयष्टिकः सामर्षं सक्रोधं धावति प्रहर्त्तुं वेगेन गच्छति इत्यर्थः (ख)।

उच्चैः शीत्कृत्य दीर्घरूपेण शीत्कारं कृत्वा सर्वाङ्गं सर्वशरीरं प्रहारनिवारणाय स्वस्य विलासिभावं प्रकटय्य दीर्घशीत्कारेण रोमाञ्चयति इति भावः (ग)।

ततः एवमुभयोरभिनयानन्तरम्, अन्योन्यं परस्परं नायिकाञ्चलं नायिकायाः मृगाङ्कलेखायाः अञ्चलं वस्त्रप्रान्तं गृहीत्वा धृत्वा मम इयम् नायिका इति उच्चार्य्य कथयित्वा कलहायमानौ कलहं कुर्वन्तौ, नृत्यतः नृत्यं कुरुतः (घ)।

आर्य्य! भगवन् प्रभो! अद्य कलहः विवादः तिष्ठतु आस्तां समीपवर्त्तिनी सम्पूर्णक्षीणा रजनी रात्रिः वर्त्तते भवति प्रत्यूषहोमार्थं प्रातर्होमार्थं, श्वःप्रातः होमं

उभौ। तथा अस्तु (च)।

इति निष्क्रान्ताः सर्वे।

इति हास्यार्णवे प्रहसने सभानिर्णयो नाम
प्रथमोऽङ्कः।

---

## द्वितीयोऽङ्कः।

---

ततः प्रातः प्रविशति विश्वभण्डः शिष्यश्च।

विश्वः। (प्राचीमवलोक्य) अहो दिगङ्गनाशिरःसिन्दूर-शोभेव दिनकरकिरणावली दृश्यते (क)।

(परिक्रम्य पुरो वापीमवलोक्य च) (ख)।

अन्यत्र वञ्चितनिशं परिलोहिताङ्ग-
मन्याङ्गनागतमिवागतमुष्णरश्मिम्।

---

कर्त्तुमित्यर्थः मदनान्धमिश्रः मदनेन कामेन अन्धः, इति अन्वर्थनाम्ना कश्चित् अध्यापकः आगमिष्यति आयास्यति, स खलु यत् आदिशति आज्ञापयति तत् कर्त्तव्यम् विधेयम् भवद्भिरिति शेषः (ङ)।

तथा अस्तु, तदेव भवतु (च)।

---

अहो! इति विस्मयसूचकमव्ययम्। दिगङ्गनायाः दिक्रूपनायिकायाः शिरसि ललाटे सिन्दूरशोभा इव दिनकरकिरणावली भास्करकिरणश्रेणी दृश्यते अवलोक्यते (क)।

पुरः अग्रे वापीं दीर्घिकाम् अवलोक्य दृष्ट्वा (ख)।

प्रातःकालं वर्णयति अन्यत्रेति। इयं पद्मिनी नलिनी, कुपिता इव खण्डितनायिका इव इत्यर्थः, अन्यत्र लोकालोकपर्वतान्तराले वञ्चितनिशं यापितरात्रिं, नायिकापक्षे

प्रातर्निरीक्ष्य कुपितेव हि पद्मिनीयम्
उत्फुल्लरक्तकसुलोहितलोचनाऽभूत् ॥ १ ॥

अपिच ।

नारीणां मृगनाभिकुङ्कुमरसप्रक्षालनश्यामलान्
सम्भोगश्रमशीकरान् परिहरन्नाकम्पयन् कुन्तलान् ।
पुष्पामोदमनोरमान् विगलितानम्भोजगन्धं वहन्
प्रातस्त्यः पवनो वहत्ययमतिस्वान्तप्रमोदप्रदः ॥ २ ॥

---

अन्यत्र अन्यनायिकासमीपे क्रीड़या यापितरात्रिम् इत्यर्थः परिलोहिताङ्गम् उदय-कालि सम्यक्शोणितवर्णमूर्त्तिं, नायिकापक्षे रात्रिजागरणेन सम्यक्रक्तवर्णनयना-द्यङ्गम् आगतम् उदितम् अन्यत्र समीपमागतम् अन्याङ्गमागतम् अन्यनायिकासक्तं नायकमिव इत्यर्थः उष्णरश्मिं खरांशुं प्रातःनिरीक्ष्य दृष्ट्वा, उत्फुल्लानि विकसितानि रक्तकानि वापीस्थितरक्तकह्लारपुष्पाणि एव नयनानि यस्याः सा अन्यत्र उत्फुल्ले विकसिते रक्तके रक्तकह्लारपुष्पे इव नयने यस्याः सा अभूत् अभवत् । यथा खण्डितनायिका अन्यसङ्गतं पतिं प्रातरागतं दृष्ट्वा कोपेन आरक्तवर्णनयना भवति तद्वत् पद्मिनी प्रातरुदितं भास्करम् अवलोक्य कोपेन इव समीपवर्त्तिविकसितकह्लारपुष्परूपनयना अभवत् इति भावः । वसन्ततिलकं वृत्तम् ॥ १ ॥

नारीणामिति । अति अतिशयं यथा स्यात्तथा स्वान्तप्रमोदप्रदः स्वान्तस्य मनसः प्रमोदप्रदः प्रीतिदायकः अयं प्रातस्त्यः प्रातःकालीनः पवनः मलयजः, नारीणां रमणीनां मृगनाभिकुङ्कुमरसानां प्रक्षालनेन धौतक्रियया श्यामलान् कृष्णलोहित-वर्णान् सम्भोगश्रमशीकरान् सुरतश्रमजनितवारिबिन्दून् परिहरन् गृह्णन् पुनः पुष्पामोदेन पुष्पगन्धेन मनोरमान् मनोहरान् विगलितान् स्खलितकबरीबन्धान् कुन्तलान् मूर्द्धजान् आकम्पयन् आधुनन्, तथा अम्भोजस्य नायिकाक्रीड़ापद्मस्य इति यावत् गन्धम् आमोदं वहन् हरन् वहति शैत्यमान्द्यसौगन्ध्यगुणविशिष्टो वायुः इतस्ततः सञ्चरति इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

(उभौ परिक्रम्य बन्धुरायाः प्राङ्गणमुपसृत्य प्रविष्टौ युगपत्)। क्व सा बन्धुरा नायिका च (ग)।

(ततः प्रविशति बन्धुरा नायिका च।)

(विश्वः। मृगाङ्कलेखामवलोक्य।)

अस्याः शरच्छशधरप्रतिमाननायाः
किञ्चित्कटाक्षमिलिता यदि नैव दृष्टिः।
तत् केन लक्ष्यत इदं किल कर्णलग्न-
मिन्दीवरं मृदुलमञ्जनपत्ररम्यम्॥ ३॥

अपिच।

निद्रया परिघूर्णनशीला बलवदूर्द्ध्वतारका लोलाः।
अस्या नयननिपाताः दुःसहनीया हरस्यापि॥ ४॥

---

युगपत् एकदैव गुरुशिष्यौ ऊचतुरिति शेषः, किं तत्, क्व कुत्र सा बन्धुरा कुट्टिनी नायिका मृगाङ्कलेखाच (ग)।

अस्याः इति। शरच्छशधरप्रतिमं शरच्चन्द्रसदृशम् आननं यस्याः तादृश्याः अस्याः मृगाङ्कलेखायाः दृष्टिः, नयनं किञ्चित् कटाक्षमिलिता ईषदपाङ्गावलोकनसहिता ईषत् वक्रभावादिचातुर्य्यसहिता इति यावत् यदि नैव नो भवेच्चेत् इत्यर्थः तत् तर्हि इदं कर्णलग्नं कर्णावतंसभूतं मृदुलं कोमलम् अञ्जनपत्ररम्यम् अञ्जनपत्रैः नीलवर्णदलैः रम्यं सुन्दरं नीलवर्णदललेन अतिमनोहरम् इत्यर्थः, इन्दीवरं नीलपद्मं "इन्दीवरञ्च नीलेऽस्मिन्" इत्यमरः केन लक्ष्यते दृश्यते केनापि न इत्यर्थः इन्दीवरापेक्षया अस्याः नयनयोरपाङ्गावलोकनादिभिरतीव सौन्दर्य्यमिति भावः। वसन्ततिलकं वृत्तम्॥ ३॥

निद्रयेति। अस्याः मृगाङ्कलेखायाः निद्रया निद्रावशेन बलवत्, अतिशयं यथा तथा परिघूर्णनशीलाः वंभ्रम्यमाणाः ऊर्द्ध्वतारकाः नयनयोरूर्द्ध्वभागे स्थिता तारकाः येषु ते, लोलाः चञ्चलाः नयननिपाताः कटाक्षपातैः हरस्यापि धैर्य्यच्युतिर्भवति अन्येषान्तु का कथा इति भावः। आर्य्या॥ ४॥

कलः। बन्धुरे! दाणिम्पि णाआदो मअणान्धमिस्सो (घ)।

(नेपथ्ये।)

वेश्याङ्गरागरसलोहितयज्ञसूत्रः
शक्राशनाशनविलोहिततारनेत्रः
आभालपूर्णतिलको हृतधर्मकृच्छ्रः
संसर्पति स्वयमयं मदनान्धमिश्रः॥ ५॥

(ततः प्रविशति शिष्येण कुलालनामधेयेन अनुगम्यमानो मनदान्धमिश्रः)।

(समन्तादवलोक्य) अहो! भ्रमद्भ्रमरावलीवलयितरसाल वकुलः कोकिलकलध्वनिजनितविषादविरहिणीजनपीवर-निश्वासानिलः कुसुमकालो वर्त्तते (ङ)।

---

बन्धुरे! इदानीमपि नायातो मदनान्धमिश्रः (घ)।

---

इदानीमपि अधुनापि नायातः न आगतः (घ)।

मदनान्धमिश्रस्य प्रवेशं सूचयति वेश्येति। वेश्यानां वारनारीणाम् अङ्गराग-रसेन अलक्तकादिरागेण लोहितं रक्तवर्णं यज्ञसूत्रं यस्य सः, शक्राशनस्य भङ्गाचूर्णस्य अशनेन पानेन विलोहिते रक्तवर्णे तारनेत्रे सतारकनयने यस्य सः आभालम् आललाटं यथा तथा पूर्णम् अविच्छिन्नं तिलकं यस्य सः हृतं परित्यक्तं धर्मकृच्छ्रं धर्मोपार्जननिमित्तक्लेशो येन, सः अयं मदनान्धमिश्रः स्वयं संसर्पति गच्छति। वसन्ततिलकं वृत्तम्॥ ५॥

अहो इति विस्मयसूचकमव्ययम्। भ्रमन्त्या इतस्ततो धावन्त्या भ्रमरावल्या मधुकरश्रेण्या वलयिताः वेष्टिताः रसालाः चूताः वकुलाश्च यस्मिन् सः, तथा कोकिलानां पिकानां कलध्वनिभिः मधुरकूजनैः जनितः उत्पन्नः यो विषादः खेदः तेन विरहिणीजनानां पान्थरमणीनां पीवरनिःश्वासः दीर्घनिःश्वासः इव अनिलः वायुर्यस्मिन् सः कुसुमकालः पुष्पसमयः वसन्तः इति यावत् वर्त्तते (ङ)।

अपिच ।

कावेरीनीरखेलद्युवतिहतिभवच्छीकरासङ्गशीतः
श्रीखण्डामोदवाही प्रमुदितमदनप्राणविश्रामधामा ।
किञ्चिद्व्याधूतचूतद्रुमसुकुलकुलः पुष्पवत्या लताया
भीतः स्पर्शादिवायं प्रसरति पवनो दक्षिणो मन्दमन्दम् ॥६॥

(आत्मगतं) कथं मया अस्मिन् मधौ गणिकां विना जीवनीयम् (च) ।

(प्रकाशं) वत्स कुलाल ! पश्य मध्याह्नः संवृत्तः ।

मार्त्तण्डश्चण्डतापैः प्रतपति वसुधां पक्षिणः कुञ्जसंस्थाः
प्रोत्फुल्लाम्भोजराजीतलशरणगता निश्चला राजहंसाः ।
पान्थाः श्रान्ताश्च कान्ताचिरविरहशिखिज्वालया प्लुष्टचित्ताः
स्थाणुच्छायासु लीनाः क्षितिलिखनपराः सन्ततं निश्वसन्ति ॥७

---

कावेरीति। कावेरीनीरे कावेरीनदीतोये खेलन्तीनां क्रीड़न्तीनां युवतीनां हत्या आघातेन भवन्तः उत्पद्यमानाः ये शीकराः वारिविन्दवः तेषाम् आसङ्गेन सम्पर्केण शीतः शीतलः, तथा श्रीखण्डस्य चन्दनस्य आमोदं वहति यः सः इति णिन् प्रत्ययः। चन्दनगन्धवाही इत्यर्थः प्रमुदितमदनस्य अत्याह्लादितकामस्य प्राणानां विश्रामधामा विश्रामाश्रयः, किञ्चित् व्याधूतः ईषत् कम्पितः चूतद्रुमाणां रसालवृक्षाणां मुकुलकुलः मञ्जरीसमूहः येन सः अयं दक्षिणः पवनः मलयमारुतः इति यावत् पुष्पवत्याः कुसुमितायाः लतायाः स्पर्शात् संसर्गात् भीत इव भयकातर इव पुष्पवत्याः इति विशेषणेन रजस्वला इति व्यज्यते तस्याः संसर्गात् भीतित्वमुपपन्नम् इति ध्वनिः। मन्दं मन्दं स्तोकं स्तोकं प्रसरति इतस्ततः सञ्चरति वहति इत्यर्थः। स्रग्धरावृत्तम् ॥ ६ ॥

अस्मिन् मधौ अस्मिन् वसन्तसमये गणिकां वारविलासिनीं विना मया कथं जीवनीयम् जीवितव्यम् भवितव्यम् (च)।

मार्त्तण्ड इति। मार्त्तण्डः सूर्य्यः चण्डतापैः प्रचण्डकिरणैः वसुधां पृथ्वीं प्रतपति सन्तापक्लिष्टां करोति, तथा पक्षिणः पक्षिणः कुञ्जसंस्थाः लतामण्डपाभ्यन्तरगताः भवन्ति इति शेषः राजहंसाः प्रोत्फुल्लाम्भोजराजीनां विकसित-

वत्स ! कस्याश्रमे भोजनसिद्धिः अस्तु (छ) ।

कुला । अज्ज ! अत्थि दाव एत्थज्जेव णअरे बन्धुरा णाम कुट्टिणी सा क्खु अदिधीणं परिचज्जं करेदि त्ति सुणीअदि ता अज्ज तत्त ज्जेव भोअणसिज्झि (ज) ।

मदनः । कुलीना सा ? (झ) ।

कुला । एत्थ को सन्देहो चण्डालोवि अस्स घरे पाणीअं ण पीअदि (ञ) ।

---

आर्य्ये ! अस्ति तावत् अत्रैव नगरे बन्धुरा नाम कुट्टिनी सा खलु अतिथीनां परिचर्य्यां करोति इति श्रूयते तदद्य तत्रैव भोजनसिद्धिः (ज) ।

अत्र कः सन्देहः चण्डालोऽपि अस्याः गृहे पानीयं न पिबति (ञ) ।

---

सरोजश्रेणीनां तलमेव निम्नस्थानमेव शरणम् आश्रयं गताः प्राप्ताः, खरकर-किरणभयेन विकसितपद्मश्रेणीतलरूपाश्रयस्थिताः सन्तः निश्चलाः निश्चेष्टाः भवन्ति इति शेषः । तथा श्रान्ताः क्लान्ताः पान्थाः पथिकाश्च, कान्ताचिर-विरहशिखिज्वालया कान्तायाः प्रियायाः चिरविरहशिखिनः चिरविच्छेदानलस्य या ज्वाला शिखा तया प्लुष्टचित्ताः दग्धमानसाः सन्तः स्थाणुच्छायासु शाखादि-विहीनवृक्षच्छायासु लीनाः संसक्ताः उपविष्टाः इति यावत्, तथा क्षितिलिखनपराः क्षितौ भूमौ लिखने रेखाविन्यासे पराः आसक्ताः चिन्तया भूमिलिखनतत्पराः सन्तः, भूमिलिखनन्तु चिन्तालक्षणम् इति प्रसिद्धम् । सततं नियतं निःश्वसन्ति सुदीर्घमुच्छ्वसन्ति । स्रग्धरावृत्तम् ॥ ७ ॥

वत्स ! कस्य आश्रमे गृहे भोजनसिद्धिः भोजनक्रियासिद्धिः अस्तु भवेदित्यर्थः । अस्तु इति इच्छाप्रकाशने (छ) ।

अत्रैव अस्मिन्नेव नगरे, अस्ति वर्त्तते, सा कुट्टिनी, अतिथीनाम् अभ्यागतानां, परिचर्य्यां सत्कारं, तत्र कुट्टिनीगृहे, भोजनसिद्धिः भोजनक्रियासिद्धिः भविष्यति इति शेषः (ज) ।

सा कुट्टिनी, कुलीना ? सत्कुलसम्भवा (झ) ।

अत्र अस्याः सद्वंशजातत्वे कः सन्देहः कोऽपि सन्देहो नास्ति यतः अस्याः कुट्टिन्याः गृहे निलये पानीयं जलं चण्डालोऽपि न पिबति (ञ) ।

मदः। (सोत्साहं।) वत्स! तदुपसर्पावः।
(इत्युभौ परिक्रम्य बन्धुरायाः प्राङ्गणमुपसृत्य उपविष्टौ।) (ट)
बन्धुरा। अज्ज! एदं भद्दासणं उवविसदु मिस्सो (ठ)।
मदः। (नाट्येन उपविश्य सर्वानवलोक्य च आत्मगतम्)।
अहो! आश्चर्यं पुरतो नायिकारत्नम् (ड)।
सायं चन्द्रकलायुतोदयगिरिस्पर्द्धां दधानौ स्तनौ
शैलोत्तुङ्गतरौ नखाङ्करुचिरौ शोणाम्बराभ्यन्तरे।
अस्याः कं न विलोकनोत्कमकरोत् तीक्ष्णः कटाक्षः क्षणं
भृङ्गाक्रान्तगरिष्ठकेतकदलभ्रान्तिं वहन्नप्ययम्॥ ८॥

---

आर्य्य! इदं भद्रासनम्, उपविशतु मिश्रः (ठ)।

---

वत्स! तत् तस्मात् उपसर्पावः आवामिति शेषः। बन्धुरायाः कुट्टिन्याः प्राङ्गणं चत्वरम् (ट)।

इदं भद्रासनम् उत्तमासनम् उपविशतु, अत्र आस्तां मिश्रः मदान्धमिश्रः, इति यावत् (ठ)।

पुरतः अग्रे आश्चर्यम् अद्भुतं नायिकारत्नं विराजते इति शेषः (ड)।

तद्वर्णयति सायमिति। अस्याः नायिकायाः शोणाम्बराभ्यन्तरे रक्तवस्त्रमध्ये शैलोत्तुङ्गतरौ, शैलवत् उत्तुङ्गतरौ उन्नततरौ तथा नखाङ्करुचिरौ नखाङ्केन नखचिह्नेन रुचिरौ मनोज्ञौ स्तनौ पयोधरौ, सुतरां सायं चन्द्रकलायुतस्य, सायंकालोदितचन्द्रबिम्बयुक्तस्य, उदयगिरेः उदयाचलस्य स्पर्द्धां गौरवं दधानौ बिभ्रतौ, उन्नतत्या, रक्तवर्णनखचिह्नेन च सायंकालोदितचन्द्रकलायुक्तोदयाचलस्य गौरवं बिभ्रतौ तिष्ठत इति शेषः। तथा अयं तीक्ष्णः खरतरः कटाक्षोऽपि भ्रूभङ्गियुक्तावलोकनमपि क्षणं क्षणकालं व्याप्य भृङ्गाक्रान्तं भ्रमरविचित्रं यत् गरिष्ठकेतकदलं दीर्घकेतकपुष्पपत्रं, तस्य भ्रान्तिं भ्रमं वहन् दधानः जनयन् इत्यर्थः। कं जनं विलोकनोत्कं विलोकनाय दर्शनाय उत्कम् उत्कण्ठितं न अकरोत्, सर्वानपि उत्कण्ठितान् अकरोदित्यर्थः। शार्दूलविक्रीडितं छन्दः॥ ८॥

अपि च।

उत्तुङ्गस्तनशैलदुस्तरमुरो निम्नातिनाभिस्थली
भीमं देहवनं स्फुरद्भुजलतं लोमालिजालाकुलम्।
व्याधः पञ्चशरः किरत्यतितरां तीक्ष्णान् कटाक्षाशुगान्
तन्मे ब्रूहि मनःकुरङ्ग! शरणं कं साम्प्रतं यास्यसि॥ ९॥

(पुनः सविमर्षं) कथमेतौ कितवौ वञ्चनीयौ। भवतु तावदात्मनो वैष्णवत्वं प्रकटीकृत्य वञ्चयामि (ढ)। (प्रकाशम्)।

जिह्वे! अनिशं हरिरिति स्मर लोचन! त्वं
व्याप्तं विलोकय जगद्धरिणा समस्तम्।

---

पुनरपि तद्रूपं वर्णयति उत्तुङ्गेति। अस्याः देहवनं शरीरवनं शरीरं काननमिव विभाति इत्यर्थः। यतः उरः वक्षःस्थलम् उत्तुङ्गस्तनशैलदुस्तरम् अत्युच्चकुच-पर्वताभ्यां दुस्तरं दुर्गमं तथा नाभिस्थली नाभिदेशः अतिनिम्ना अतिगम्भीरा, तथा स्फुरन्तौ विकाशमाने भुजलते बाहुलते यस्मिन् तत् तथोक्तं बाहुलताभ्यां विराजित-मित्यर्थः, लोमभिरेव लोमावलिभिरेव अलिजालैः भ्रमरसमूहैः आकुलं व्याप्तम्, अतः भीमं भयजनकं, पुनरिति ऊहनीयम्। पञ्चशरः पञ्चबाणः कामः इति यावत्, व्याधः किरातरूपी सन् तीक्ष्णान् शाणितान् कटाक्षाशुगान् नयनबाणान् अतितरां अतिशयं यथा तथा किरति विक्षिपति, साम्प्रतम् इदानीं हे मनः-कुरङ्ग! हे चित्तहरिण! कं शरणं रक्षितारं "शरणं गृहरक्षित्रोः" इत्यमरः। यास्यसि प्राप्स्यसि तत् रक्षाप्राप्तिस्थानं मे मह्यं ब्रूहि भण, मया तु इदानीं मन्तव्यस्थानं न दृश्यते इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ ९॥

कथं केन प्रकारेण एतौ विस्रम्भभङ्गकलाहाङ्कुरौ कितवौ धूर्त्तौ वञ्चनीयौ? प्रतार्य्यौ? भवतु तावत् आस्तां तावत्, आत्मनः स्वस्य वैष्णवत्वं विष्णुपरायणत्वं प्रकटीकृत्य प्रदर्श्य वञ्चयामि प्रतारयामि (ढ)।

स्वस्य वैष्णवत्वं दर्शयति जिह्वे इति हे जिह्वे! हे रसने! त्वम् अनिशं नियतं हरिरिति स्मर नियतहरिनामोच्चारणं कुरु इत्यर्थः। हे लोचन! हे नयन! त्व

आकर्णय श्रवण ! कीर्त्तिकथा मुरारे-
र्नारायणं शरणमाश्रय चित्त ! नूनम् ॥ १० ॥

(पुनरात्मगतम्) आः जातं हरिस्मरणेन महापातकं किं करिष्यामि प्रायश्चित्तमात्मनः (थ) ।

विश्वः । (आकर्ण्यात्मगतं) धूर्त्तोऽयं मिश्रः कैतवं प्रकटयति । भवतु अहमपि किञ्चित् प्रकटयामि (त) । (प्रकाशं)

त्रैलोक्यमौलिमुकुटाञ्चितनीलरत्नं
पद्मालयावदनतामरसद्विरेफम् ।
दैत्याङ्गनानयनतोयनिपातधूमं
कृष्णं सदैव मनसा परिचिन्तयामि ॥ ११ ॥

---

हरिणा विष्णुना व्याप्तं मिलितं विष्णुमयम् इत्यर्थः समस्तं निखिलं जगत् विश्वं विलोकय पश्य । श्रवण ! हे कर्ण ! त्वं मुरारेः कृष्णस्य कीर्त्तिकथा यशःकीर्त्तनम् आकर्णय शृणु, हे चित्त ! हे मनः ! त्वं नूनं निश्चितम् शरणम् आश्रयम् रक्षितारम् इत्यर्थः नारायणं हरिम् आश्रय अवलम्बस्व । वसन्ततिलकं वृत्तम् ॥ १० ॥

आः इति कोपसूचकमव्ययम् । हरिस्मरणेन ईश्वरचिन्तया महापातकं जातम् अभवत् आत्मनः स्वस्य किं प्रायश्चित्तं, करिष्यामि आचरिष्यामि कीदृशप्रायश्चित्तेन एवंविधपातकस्य क्षयो भवेत् तन्न जाने इति भावः ( थ ) ।

धूर्त्तः शठः अयं मिश्रः मदनान्धमिश्रः, कैतवं धूर्त्ततां प्रकटयति दर्शयति भवतु आस्तां तावत् अहमपि किञ्चित् धूर्त्तत्वं प्रकटयामि दर्शयामि ( त ) ।

त्रैलोक्यमिति । यः त्रैलोक्यमौलिमुकुटस्य भुवनशिरोभूषणस्य नित्यधाम्नः वैकुण्ठस्य इति यावत् अञ्चितं पूजितं महामूल्यमित्यर्थः । नीलरत्नं नीलकान्तमणिस्वरूपं, तथा पद्मालयायाः लक्ष्म्याः वदनतामरसस्य मुखाम्बुजस्य द्विरेफं भ्रमरस्वरूपं, तथा दैत्याङ्गनानां दैत्यपत्नीनां नयनतोयनिपातस्य नेत्रजलपतनस्य धूमं धूमस्वरूपं दानवपत्नीनां नयनजलपतनस्य कारणं दैत्यनाशकमित्यर्थः । कृष्णं हरिं मनसा चेतसा सदैव परिचिन्तयामि सर्वदैव स्मरामि । वसन्ततिलकं वृत्तम् ॥ ११ ॥

मदः। (सरोषं) वत्स! कुलाल! पठ वैष्णवधर्मम्।

कुला। अज्ज! जं आणवेदि (थ)। (इति संस्कृतमाश्रित्य पठति।

आयुः क्षीणमिदं परं कलियुगे दैवात्ततः पामरैः
लोकैरप्युपवासकष्टविधिना व्यर्थं वपुः क्षीयते।
ज्ञात्वैवं सुधियो विहाय विविधक्लेशव्रतं निष्फलं
नाना भोगविलासिनीरसयुतं धर्मं भजन्ते द्रुतम्॥ ११॥

विघ्नः। (सक्रोधं) वत्स कलहाङ्कुर! पठ वैष्णवधर्मम्।

कलः। (संस्कृतमाश्रित्य पठति)।

कृत्वा लोकभयात् नृणां जडधियां कष्टोपवासं निशा-
काले प्राणविनाशसंशयकरीं सोढ्वापि मर्मव्यथाम्।
प्रातश्चेद्यदि जीवितं स्थितमिह प्राप्तिस्तथाप्यन्धसः
साक्षाज्जीवनसंशयः प्रथमतो मुक्तिः परोक्षा क्व सा॥ १२॥

---

आर्य्य! यदाज्ञापयति (थ)।

आर्य्य! भगवन्! यत् आज्ञापयति आदिशति तथा करोमि इत्यर्थः (थ)।

वैष्णवधर्मं पठति आयुरिति। दैवात् कर्मफलवशात् कलियुगे अस्मिन् कलिकाले इदं आयुः जीवितकालः परं क्षीणम् अतिक्षीणं स्वल्पम् इति यावत् ततोऽपि अल्पजीवनादपि पामरैः पापिष्ठैः लोकैः, उपवासकष्टविधिना अनाहारजनितक्लेश-विधानेन व्यर्थं निरर्थकं यथा स्यात्तथा वपुः शरीरं क्षीयते अपक्षीयते शरीरनाशः क्रियते इत्यर्थः एवं ज्ञात्वा वृथा देहक्षयम् अवेत्य सुधियः पण्डिताः, निष्फलं निष्प्रयोजनं विविधक्लेशव्रतं नानादुःखप्रदं नियमं विहाय परित्यज्य नानाभोगविलासिन्याः नानाभोगविहारिण्याः वाराङ्गनायाः इति यावत् रसेन युतं धर्मं द्रुतं शीघ्रं यथा तथा अविलम्बेन इत्यर्थः भजन्ते सेवन्ते। शार्दूलविक्रीडितं वृत्तम्॥ १२॥

कलहाङ्कुरोऽपि वैष्णवधर्मं पठति, कृत्वेति। जड़धियां मन्दबुद्धीनां मूर्खाणाम् इति यावत् नृणां मानवानां, लोकभयात् लोकनिन्दाभयं प्राप्य कष्टोपवासं कष्टेन कृच्छ्रेण उपवासं भोजनचतुष्टयनिवृत्तिं कृत्वा अनुष्ठाय, निशाकाले रजन्यां प्राण-

अपिच।

क्लेशोपवासविधिना सुकृतं वदन्ति
ये तन्मुखं सपदि पूरय भस्मपुञ्जैः।
एकः प्रसीदति यदा जगदीशशम्भुः
मुक्तिस्तदा पिशितमीनसुराङ्गनाभिः॥ १४॥

मदः। (आकर्ण्यात्मगतं) धूर्त्तोऽयम् उपाध्यायो वञ्चयितुम् अशक्यो जीर्णमार्जारं काञ्जिकया प्रतारयितुं न शक्यते। भवतु विनयेन वञ्चयामि। (प्रकाशं) भगवन्! अय मह्हमभिवादये (८)।

---

विनाशसंशयकरीं मरणविधायिनीं मर्मव्यथाम् अन्तःकरणपीड़ां सोढ्वापि संसह्यापि प्रातश्चेत् प्रातःकालेऽपि जीवितम् आयुः यदि स्थितं यदि स्यात् तथापि तर्हि इह संसारे अन्धसः अन्नस्य प्राप्तिः लाभः स्यात् प्रथमतः आदौ एव साक्षाज्जीवनसंशयः प्रत्यक्षमरणव्यापारः, सम्भवति इति शेषः। सा परोक्षा अप्रत्यक्षा मुक्तिः क्व? कुत्र यदि उपवासादिना मरणं स्यात् तर्हि अप्रत्यक्षा मुक्तिः कुत्र सम्भवेदिति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ १३॥

पुनः पठति क्लेशेति। क्लेशोपवासविधिना दुःखप्रदोपवासानुष्ठानेन सुकृतं पुण्यं भवेत् इति ये पण्डिताः वदन्ति कथयन्ति सपदि तत्क्षणमेव तन्मुखं तेषां पण्डितानां मुखं भस्मपुञ्जैः भस्मराशिभिः पूरय परिपूर्णतां प्रापय। यदा यस्मिन् समये एकः अद्वितीयः जगदीशशम्भुः जगत्प्रभुः शिवः, पिशितमीनसुराङ्गनाभिः मांसमत्स्यमद्यरमणीभिः प्रसीदति सन्तुष्येत् तदा तस्मिन्नेव समये मुक्तिः मोक्षः स्यात् इत्यर्थः। वसन्ततिलकं वृत्तम्॥ १४॥

अयम् उपाध्यायः एषः अध्यापकः धूर्त्तः कितवः वञ्चयितुमशक्यः अप्रतार्य्यः, अप्रतार्य्यत्वम् अर्थान्तरेण द्रढ़यति जीर्णेति। जीर्णमार्जारं वृद्धविड़ालं काञ्जिकया आरनालेन पर्य्युषितान्नजलेन इति यावत् प्रतारयितुं वञ्चयितुं न शक्यते, भवतु अस्तु तावत् विनयेन विनीतभावेन वञ्चयामि प्रतारयामि, अयमहम् एषोऽहम् अभिवादये प्रणमामि (८)।

विश्व:। (उच्चैः) आयुष्मान् भव सौम्य किन्त्व अयुक्तमेतत् भवादृशां यद्वाराङ्गनाग्रतो मयि प्रथममभिवादनम् (ध)।

मद:। अहो वेश्याभ्रमेण भवस्तु प्रणामः कृतः (न)।

विश्व:। (विहस्य) सत्यमेव मदनान्धोऽसौ यतः पुंसि अपि वेश्याभ्रमः (प)।

मद:। (उपसृत्य) वाराङ्गने। त्वामहं प्रणमामि।

बन्धु। पुत्ति! उट्ठिअ आसिसं कुण (फ)।

मृगा। (उत्थाय) गोरी दे सुप्पसण्णा होदु (ब)।

(इति लज्जां नाटयति।)

मद:। अहो! आश्चर्यमस्याः।

पादाभ्यामतिविपुलो नितम्ब एषः
प्रोद्वोढुं कथमपि शक्यते मृगाक्ष्याः।

---

पुत्रि! उत्थाय आशिषं कुरु (फ)।

गौरी ते सुप्रसन्ना भवतु (ब)।

---

आयुष्मान् भव दीर्घायुर्भव, किन्तु पुनः कथयामि इत्यर्थः भवादृशां भवद्विधानाम् अयुक्तमेतत् अनुचितमिदं यत् वाराङ्गनाग्रतः वेश्यासमीपे मयि प्रथमम् अभिवादनं प्रणामः कृतः वेश्यायां विद्यमानायां कथं मयि प्रथमः प्रणामः कृतः शिक्षितानाम् एतत् न उचितमिति भावः (ध)।

अहो विस्मयसूचकमव्ययम्। वेश्याभ्रमेण वारनारीभ्रान्त्या भवतु प्रणामः अभिवादनं कृतः (न)।

सत्यमेव यथार्थमेव असौ मदनान्धः, एषः मदनेन अन्धः यतः पुंसि अपि पुरुषेऽपि वेश्याभ्रमः वाराङ्गनाभ्रान्तिः (प)।

आशिषं आशीर्वादम् (फ)।

गौरी गौरवर्णा रमणी अथवा अष्टवर्षीया अक्षतयोनिरिति भावः। कन्यापि तव हृदये, सुप्रसन्ना सन्तुष्टा भवतु (ब)।

पादाभ्यामिति। अस्याः मृगाक्ष्याः हरिणनयनायाः मृगाङ्कलेखाया इति यावत्

एकाकी वहति कथं नु मध्यभागः
प्रोत्तुङ्गस्तनकरिकुम्भयुग्मभारम् ॥ १५ ॥

वन्धु। अज्ज! विप्पवर! विण्णवेमि अज्ज अह्माणं गेहे कन्दप्पहोमो वट्टदि तं णिव्वाहयदु मिस्सो (भ)।

मदः। (सहर्षमालिङ्गितमङ्गनामवलोक्य)।

वेदी सज्जघनञ्च तत्परिसरे कुण्डं वराङ्गं फलं
नैवेद्याय कुचद्वयं मृगदृशः कामानलः प्रोज्ज्वलः।
होताऽहं खलु शुक्रहव्यनिवहः शेफस्रुवं वर्त्तते
नित्यं पञ्चशराध्वरं त्यजति कः सद्यः सुखं यत् फलम् ॥१६॥

---

आर्य्य! विप्रवर! विज्ञापयामि अद्य अस्माकं गृहे कन्दर्पहोमो वर्त्तते तं निर्वाहयतु मिश्रः। (भ)।

---

एषः अतिविपुलः अतिपीवरः नितम्बः कस्याः पश्चाद्भागः पादाभ्यां पादयुगलेन कथमपि कृच्छ्रेण प्रोढोढुं धारयितुं शक्यते, एतादृशः स्थूलनितम्बः पादद्वयेन कृच्छ्रेण धार्य्यते इत्यर्थः। तथा मध्यभागः कटिदेशः एकाकी असहायः सन् कथं केन प्रकारेण नु प्रोत्तुङ्गस्तनकरिकुम्भयुग्मभारम् अत्युच्चकुचद्वयरूपकरिगण्डद्वयभारं वहति बिभर्त्ति? अहो आश्चर्य्यमिति गद्येन अन्वयः। प्रहर्षिणी वृत्तम् ॥ १५ ॥

कन्दर्पहोमः कन्दर्पस्य कामस्य तृप्तिजनकः होमः तं होमं निर्वाहयतु निष्पादयतु (भ)।

होमद्रव्यजातानि मनसा कल्पयति वेदीति। मृगदृशः मृगाक्ष्याः सज्जघनं सुन्दरनितम्बः, वेदी यज्ञभूमिः तत्परिसरे तन्मध्यभागे, वराङ्गं व्रियते विलासिभिः प्रार्थ्यते यत् तत् वरं प्रार्थनीयम् अङ्गं योनिरिति यावत्, कुण्डम् आहुतिस्थानं, तथा नैवेद्याय नैवेद्यार्थं फलं कुचद्वयं कुम्भयुगलं, कामानलः मदनानलः प्रोज्ज्वलः, देदीप्यमानो वह्निः। तथा अहम् होता ऋत्विक्, शुक्रहव्यनिवहः शुक्राणि रेतांसि एव हव्यनिवहः, हवनद्रव्यजातम् आज्यनिचयः इत्यर्थः। उपस्थः लिङ्गमेव स्रुङ्‌ स्रुवी वर्त्तते। एतेषु द्रव्येषु सत्स्वपि को जनः पञ्चशराध्वरं

(प्रकाशं) बन्धुरे ! त्वमतिजीर्णा अकार्य्यकुशला च तन्नियो-जय स्वपुत्रीं यज्ञसामग्रीकरणाय (म)।

बन्धु। पुत्ति ! तुमं विप्पअरशासणं कुण (य)।

(मृगा। गृहं प्रविशति। उपसृत्य कलहाङ्कुरः।) पढमं अह्माणं गुरुसिस्साणं णायं विचारीअदु अज्जमिस्सो (र)।

मदः। वत्स ! खणं विरम यावत् क्रतुक्रिया निवर्त्तते (ल)। (इति गृहं प्रविश्य निर्भरं सुरतं निर्वाह्य सहर्षम्)।

आश्लेषपीड़ितकुचं श्रमघर्मितास्यं
दष्टाधरं ललितशीत्कृतमीलिताक्षम्।
चाटूक्तिचारुललितभ्रु चलत्कटाक्षं
वेश्यारतं जनिशतार्जितपुण्यलभ्यम्॥ १७॥

---

पुत्रि ! त्वं विप्रवरशासनं कुरु (य)।

---

कन्दर्पयज्ञं त्यजति ? परिहरति ? यत् फलं यस्य फलं सद्यःसुखं भवति इति शेषः। शार्दूलविक्रीड़ितं वृत्तम्॥ १६॥

अतिजीर्णा अतिवृद्धा च एवम् अकार्य्यकुशला कुकर्मतत्परा तत् नियोजय आदिश स्वपुत्रीं स्वतनयां यज्ञसामग्रीकरणाय यज्ञद्रव्याहरणाय इत्यर्थः (म)।

विप्रवरस्य शासनम् आज्ञां कुरु प्रतिपालय (य)।

प्रथमं गुरुशिष्याणां न्यायं विचारयतु आर्य्यमिश्रः (र)।

क्षणं क्षणकालं विरम तिष्ठ तावत्, यावत् यज्ञक्रिया यज्ञकार्य्यं निवर्त्तते निष्पद्यते, यज्ञकार्य्यस्य आसमाप्तेः स्थिरो भव इति भावः (ल)।

यज्ञनिर्वाहं वर्णयति आश्लेषेति। आश्लेषेण आलिङ्गनेन पीड़ितौ मर्दितौ कुचौ स्तनौ यस्मिन् तत्, तथा श्रमेण परिश्रमेण घर्मितं स्वेदयुक्तम् आस्यम् आननं यस्मिन् तत्, तथा दष्टौ चुम्बितौ अधरौ यस्मिन् तत् तथा ललितशीत्कृतेन मनोहरेण शीत् इत्याकारध्वनिना मीलिते मुद्रिते अक्षिणी नयने यस्मिन् तत् चाटूक्त्या "त्वं प्राणेभ्योऽपि गरीयसी" इत्यादि विलासवाक्येन चारौ मनोज्ञे

(परिक्रम्य वहिः गच्छति । नायिका च परिक्रामति) ।

विश्व: । (नायिकामवलोक्य आत्मगतम् ।)

यन्नेत्रं गलिताञ्जनं सुललितं निर्मुक्तरागोऽधरो
धम्मिल्ल: श्लथबन्धनः श्रमजलप्रक्षालितं चन्दनं
निष्पन्दं जघनं भुजे शिथिलता वक्ष:स्थलं कम्पते
तत् सत्यं सुरतं विधाय सुतरामेषा समागच्छति ॥ १८ ॥

कुला । (पुरः साट्टहासम् ।) अज्ज ! एक्केण णिव्वाहिदा कदुक्किआ (व) ।

मद: । (दक्षिणाक्षिसङ्कोचं निवारयति ।)

---

आर्य्य ! एकेन निर्वाहिता क्रतुक्रिया (व) ।

---

ललितभ्रुवौ यस्मिन् तत्, तथा चलत् घूर्णत् कटाक्षम् अपाङ्गावलोकनं यस्मिन् तत् एतादृशं वेश्यारतं वाराङ्गनारमणं जनिशतार्जित पुण्यलभ्यं जनिशतेन शतजन्मना अर्जितम् उपार्जितं यत् पुण्यं तेन लभ्यं प्राप्यं भवति इति शेषः । शतजन्मपुण्योपार्जनेन विना एतादृशफललाभो कदापि न भवेदितिभावः । वसन्ततिलकं वृत्तम् ॥ १७ ॥

यदिति । एषा क्रमाङ्गलेखा, सत्यं यथार्थमेव सुतरां सम्यक् यथा स्यात्तथा सुरतं रतिक्रियां विधाय सम्पाद्य समागच्छति समायाति यत् यस्मात् अस्याः, इति ऊह्यं, सुललितं सुन्दरं नेत्रं नयनं गलिताञ्जनं चुम्बनादिना प्रेमाश्रुपतनेन गलिताञ्जनं स्यन्दितकज्जलं तथा अधरः ओष्ठः चुम्बनादिना निर्मुक्तः परित्यक्तः रागः दन्तिमालक्तकादिरागः यस्य तादृशः तथा धम्मिल्लः कवरी श्लथबन्धनः स्खलितबन्धनः तथा चन्दनं सुरतसमये श्रमजलेन श्रमवारिणा प्रक्षालितं धौतं, तथा जघनं नितम्बदेशः निष्पन्दं जघ्नाघातेन निष्पन्दं स्पन्दनादिरहितं तथा भुजे करे शिथिलता वेष्टनादिक्रियानिमित्तेन दौर्बल्यं तथा वक्षःस्थलं हृदयं कम्पते कम्पते इति कम्पतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

निर्वाहिता समापिता (व) ।

कुला। किं णिव्वारणेण? अस्सस्स पुसेण किं अस्सो पूदो भोदि? (ञ)।

मदः। वत्स! तूष्णं विरम (ष)।

विश्वः। (सस्मितं) महामिश्र! भवतियं ते क्रतुक्रिया भवतु तथापि विचार्य्यतामावयोर्न्यायः। (कर्णे स्वैरं) यथेयं मृगाङ्कलेखा मया परिणीता भवति तदनुष्ठेयम् (स)।

मदः। आवाभ्यां परिणेतव्या एषा (ह)।

विश्वः। को दोषः पश्य (च)।

धर्मादिपञ्चपतिभिः खलु पाण्डुना च
युक्ता सती भवति भोजसुताहि कुन्ती।
धर्मात्मजादिभिरिहोपगता च कृष्णा
एका बहून् यदि भजेत् वद कोऽत्र दोषः? ॥ १८ ॥

---

किं निवारणेन? अन्यस्य पुखेन किम् अन्यः पूतो भवति? (ञ)।

---

निवारणस्य प्रयोजनं नास्ति भवतां क्रतुक्रियया अन्यस्य क्रतुक्रियाफलं न सम्भवतीति भावः (ञ)।

तूष्णं च गमात्रं, विरम तिष्ठ (ष)।

महामिश्र! ते तव इयं क्रतुक्रिया यज्ञक्रिया जाता मया इति शेषः भवतु आस्तां तावत् आवयोः गुरुशिष्ययोः न्यायः विवादः विचार्य्यतां निश्चीयताम्। यथा येन प्रकारेण मया इयं मृगाङ्कलेखा परिणीता उद्वाहिता भवति तत् अनुष्ठेयं विधेयम् (स)।

आवाभ्यां त्वया मया च, एषा मृगाङ्कलेखा परिणेतव्या विवाह्या (ह)।

को दोषः। कोऽपि दोषः आवां न आक्रमिष्यति इति भावः पश्य तन्निदर्शनम् अवलोकय (च)।

धर्मेति। इह जगति भोजसुता भोजराजनन्दिनी कुन्ती पाण्डुस्त्री धर्मादिभिः धर्मपवनेन्द्राश्विनीकुमारैः पञ्चभिः पतिभिः स्वामिभिः तथा पाण्डुना तदाख्येन अष्टेनापि पतिना युक्ता सती पतिव्रता भवति पातिव्रत्येन विख्याता हि आसीत्।

कुला। (आत्मगतम्) आभ्यां धूर्त्ताभ्यां मिलितं भवतु अह-मपि कलहाङ्कुरेण समं सख्यं करोमि (क)।

(इति परिक्रम्य कलहाङ्कुरस्य कण्ठमालिङ्ग्य कर्णे स्वैरम्)। वअस्स ! पेक्खस्स एदेहिं गुरुएहिं मिलिदं एषा मिअङ्कलेहा एदेहिं ज्जेव परिणेदव्या ता कधं अह्मेहिं एसा बन्धुरा णो परिणीअदि ? (ख)

कल:। वअस्स ! भद्दं ण भणिदम्। जदो अह्माणं वि बुड्ढा-सुरदं ण विसादं किं उण एक्कं पअमं दुःखं एसा तिहु-अण मोहिणी बुढ्वेहिं परिणेदव्या णहि मालइमाला वाण-रहत्यगदा सोहइ णहि कत्थुरिआगुणग्गामं कुग्गामिणो जाणन्ति णहि गलिदजोव्वणाए वक्खत्यले मोत्तिअमाला सोहइ (ग)।

---

वयस्य ! प्रेचस्व एताभ्यां गुरुभ्यां मिलितम्, एषा मृगाङ्कलेखा एताभ्यामेव परिणेतव्या तत् कथमावाभ्याम् एषा बन्धुरा न परिणीयते (ख)।

वयस्य ! भद्रं न भणितं, यतः अस्माकमपि वृद्धासुरतं न ज्ञातं किं पुन-रेकं परमं दुःखम्, एषा त्रिभुवनमोहिनी वृद्धाभ्यां परिणेतव्या, न हि मालतीमाला वानरहस्तगता शोभते, न हि कस्तूरिकागुणग्रामं कुग्रामिणो जानन्ति न हि गलित-यौवनायाः वचःस्थले मौक्तिकमाला शोभते (ग)।

---

यथा कृष्णा द्रौपदी धर्मात्मजादिभिः युधिष्ठिरभीमार्जुननकुलसहदेवैः उपगता सङ्गता च। अतः एका यदि बहून् भजेत् अत्र को दोषः ? तत् वद ॥ १९ ॥

आभ्याम् अध्यापकाभ्यां धूर्त्ताभ्यां शठाभ्यां मिलितं सङ्गतं भवतु अहमपि कलहाङ्कुरेण विश्वभक्तस्य शिष्येण समं सह सख्यं बन्धुतां करोमि (क)।

वयस्य ! सखे ! एताभ्यामेव गुरुभ्यामेव एषा मृगाङ्कलेखा परिणेतव्या विवाह्या तत् तर्हि कथं कस्मात् आवाभ्यां छात्राभ्याम् एषा बन्धुरा कुटिनी न परिणीयते विवाह्यते (ख)।

वयस्य ! सखे ! भद्रं न सुष्ठु भणितम् उक्तम्। यतः यस्मात् अस्माकं वृद्धासुरतं

कुला। वअस्स! एदेहिं ज्जेव वुड्‌ढेहिं कत्तिदिणं जीविदव्वं? एदाणं लोआन्तरगमणे एसा अम्मेहिं परिणेदव्वा (घ)।

कलः। सच्चं तधावि पढमं दुःखं (ङ)।

कुलाः। एह्निम्पि पदिवासरं एदाणं भिक्खाटणसमये एसा गेहवट्टिणी भविस्सदि बन्धुरा तु तिमिराउललोअणा तदो अम्हाणं मणोरहसिज्झि (च)।

---

वयस्य! एताभ्यामेव वृद्धाभ्यां कतिदिनानि जीवितव्यम्? एतयोः लोकान्तरगमने एषा आवाभ्यां परिणेतव्या (घ)।

सत्यं तथापि प्रथमं दुःखम् (ङ)।

इदानीमपि प्रतिवासरम् एतयोः भिक्षाटनसमये एषा गृहवर्त्तिनी भविष्यति बन्धुरा तु तिमिराकुललोचना तदा अस्माकं मनोरथसिद्धिः (च)।

---

वृद्धायां सुरतं रतिक्रिया न ज्ञातं न अभ्यस्तम्। पुनः एकं परमं दुःखं महत् कष्टम्, यत् एषा त्रिभुवनमोहिनी त्रिलोकसुन्दरी मृगाङ्कलेखा वृद्धाभ्यां गुरुभ्यां परिणेतव्या विवाह्या महद्दुःखम् अर्थान्तरन्यासेन द्रढयति न हि इत्यादि। न हि मालतीमाला मालतीपुष्पमाला वानरहस्तगता मर्कटकरगता सती शोभते विराजते। ग्रामिणः कुत्सितग्रामवासिनः जनाः कस्तूरिकागुणग्रामं मृगनाभिगुणसमूहं न हि जानन्ति न विदन्ति न हि गलितयौवनायाः वृद्धायाः वक्षःस्थले हृदये मौक्तिकमाला मुक्ताहारयष्टिः शोभते विराजते (ग)।

एतयोः गुर्व्वोः लोकान्तरगमने मरणे सति आवाभ्यां छात्राभ्याम् एषा मृगाङ्कलेखा परिणेतव्या विवाह्या (घ)

तथापि तथा चेत् प्रथमम् आपाततः दुःखम् (ङ)।

इदानीमपि यत् कर्त्तव्यं तत् शृणु इति भावः प्रतिवासरं प्रतिदिनम् एतयोः गुर्व्वोः भिक्षाटनसमये भिक्षागमनकाले एषा मृगाङ्कलेखा गृहवर्त्तिनी भविष्यति गृहे स्थास्यति इत्यर्थः, बन्धुरा तु तिमिराकुललोचना अन्धप्राया, तदा तस्मिन्नेव समये अस्माकं मनोरथसिद्धिः अभीष्टसिद्धिः भविष्यति इति शेषः (च)।

कल:। भोदु जं भणासि वग्रस्स ! (छ)।

बन्धु। (विहस्य आत्मगतं) मिलिदा सठेहिं ताणं परिचिदं भोदि (ज)।

मद:। भो महामहोपाध्याय! कीदृशो युवयोर्न्याय: क्रियतां प्रश्न: ?

विश्व:। अस्मत्काङ्क्षितां मृगाङ्कलेखां अयं परिणेतु-मिच्छति (झ)।

मद:। भो कलहाङ्कुर! तव प्रत्युत्तरं कीदृशम् ? (ञ)।

कल:। एसा मिअङ्कलेहा मए आलिङ्गिदा परिचुम्बिदा तधावि एष इमां परिणेदु मिच्छति (ट)।

मद:। अलं शुष्कचर्वणेन ज्ञातं न्यायतत्त्वम्। एषा प्रथ-मत उपाध्यायेन कल्पिता एतेन कथमपि अंशैकेन अस्य भवति

---

भवतु यत् भणसि वयस्य ! (छ)।

मिलितं शठाभ्यां तयो: परिचितं भवति (ज)।

एषा मृगाङ्कलेखा मया आलिङ्गिता, परिचुम्बिता तथापि एष इमां परिणेतुम् इच्छति (ट)।

---

भवतु तथास्तु यत् कथयसि (छ)।

शठाभ्यां धूर्त्ताभ्यां, तयो: शठयो: परिचितं परिचय: आलाप इति यावत (ज)।

अस्मत्काङ्क्षिताम् अस्मदभिलषितां मृगाङ्कलेखाम् अयं, मम शिष्य: इति यावत् परिणेतुम् उद्वोढुम् इच्छति अभिलषति (झ)।

भो कलहाङ्कुर ! तव प्रत्युत्तरं प्रतिवचनं कीदृशम् ? किं रूपम् उत्तरं ददासि इति शेष: (ञ)।

आलिङ्गिता आश्लिष्टा, परिचुम्बिता आस्वादिताधरसुधा च तथापि शिष्योप-युक्तापि एष: गुरु: इमां मृगाङ्कलेखां परिणेतुम् उद्वोढुम् इच्छति अभिलषति (ट)।

शुष्कचर्वणेन अलं वृथा निरसविषयचिन्तया, न्यायतत्त्वं याथार्थ्यं मया ज्ञातम्

व्यवस्थापकत्वात् समन्तादस्माकं भवति। (पुनः ससम्भ्रमं) भो भो वत्स ! यथा त्वं द्वादशवर्षीयो वर स्तथा च बन्धुरा उपपतिगणनालेखामिव लेखां शरीरतो दधती कन्या इयं तव योग्या वर्षशतात् किञ्चिदपि अधिका (ठ)।

(उपसृत्य कुलालः। संस्कृतम् माश्रित्य) व्यवस्थापकशिष्यत्वात् ममापि एषा भवति (ड)।

मदः। भो वत्स ! कलहाङ्कुर भवतु एवं भवता मच्छिष्येण समम् एषा परिणीयताम् (ढ)।

कलः। जधा सासणं विप्पअरस्स (ण)।

---

यथा शासनं विप्रवरस्य (ण)।

---

अवगतम्। एषा मृगाङ्कलेखा प्रथमतः प्राक् उपाध्यायेन गुरुणा कल्पिता अभिलषिता एतेन, एतावता कथमपि केनापि प्रकारेण अस्य उपाध्यायस्य एषा अंशेन भागेन भवति। उपाध्यायस्तु प्रथमाभिलाषेण अस्याः मृगाङ्कलेखायाः किञ्चिन्मात्राधिकारी भवति इति भावः। अस्माकन्तु व्यवस्थापकत्वात् विचारकत्वात् समन्तात् सम्यक् भवति अहमपि विचारकत्वेन सम्यक् अधिकारी भवामि इति भावः। भो भो वत्स ! हे कलहाङ्कुर ! यथा यादृक् त्वं द्वादशवर्षीयः द्वादशवर्षवयस्कः वरः परिणेता, तथा तादृशी बन्धुरा च शरीरतः शरीरे उपपतिगणनालेखामिव "एतावत्सु वर्षेषु मया कति उपपतयः कृताः" इति निरूपणार्थं दत्ता या रेखा तामिव लेखां लुलितमांससंकोचवशात् सञ्जातरेखां दधती बिभ्रती, इयं कन्या पात्री, तव योग्या उपयुक्ता, एषा तु वर्षशतात्किञ्चिदपि अधिका वर्षशताधिकवयस्का भवति (ठ)।

व्यवस्थापकशिष्यत्वात् विचारकशिष्यत्वात्, मम एव भवति विचारकस्य भवतः शिष्योऽहम् अतः ममैव एषापि भवति इत्यर्थः (ड)।

भो वत्स ! मच्छिष्येण कुलालेन समं सह एषा बन्धुरा परिणीयताम् उद्वाह्यताम् (ढ)।

यथा शासनम् आदेशः तथा करोमि इति भावः (ण)।

बन्धु। (सहर्षम् आत्मगतं संस्कृतमाश्रित्य) अहो! मयि प्रसन्नः प्रजापतिः यतो वार्द्धक्येऽपि तरुणपतिद्वयलाभः (त)।

विश्वः। (कालद्वाङ्कुरम् अवलोक्य संस्कृतम् आत्मगतम्।)

निष्क्रामति शिशोः कायो येन रन्ध्रेण योषितः।
किं करिष्यति तत्रायं वटुः शिश्नशलाकया॥ २०॥

(पुनः प्रकाशम्।) प्रत्यासन्नो विवाहोत्सवस्तत् कथं न आह्वयते दक्षिणराढ़ीयो महानिन्दकाचार्य्यः (थ)।

(प्रविश्य महानिन्दकाचार्य्यः। सर्वानवलोक्य सदम्भम्।)

ब्रह्माण्डे के द्विजाः सन्ति पाण्डित्येन कुलेन वा।
ये स्पर्द्धितुं मया सार्द्धं किञ्चिदावर्जितोद्यमाः?॥ २१॥

(पुनः सगर्वं) मया रचितायत्वारो वेदाः।

---

वार्द्धक्येऽपि वृद्धावस्थायामपि तरुणपतिद्वयलाभः नवीनपतिद्वयप्राप्तिः (त)।

निष्क्रामतीति। योषितः भार्य्याः येन रन्ध्रेण गर्त्तेन भगेनेत्यर्थः। शिशोः बालकस्य कायो देहः निष्क्रामति निर्गच्छति। अयं वटुः बालकः शिश्नशलाकया उपस्थखड़िकया क्षुद्रखड़िकावदुपस्थेन इत्यर्थः तत्र रन्ध्रे भगे किं करिष्यति? किञ्चिदपि कर्त्तुं न समर्थो भविष्यति? उपस्थचालनेन सुखं न अनुभविष्यति न वा अनुभावयिष्यति इति भावः। अनुष्टुब् वृत्तम्॥ २०॥

प्रत्यासन्नः निकटवर्त्ती विवाहोत्सवः परिणयोत्सवः कथं कुतः न आह्वयते न आकार्य्यते दक्षिणराढ़ीयः दक्षिणराढ़देशोद्भवः महानिन्दकाचार्य्यः महानिन्दकानाम् आचार्य्यः गुरुः, इति अन्वर्थनामा कश्चित् ब्राह्मणः (थ)।

ब्रह्माण्डे इति। ब्रह्माण्डे इह जगति के द्विजाः ब्राह्मणाः सन्ति पाण्डित्येन विद्यावत्तया कुलेन वंशमर्य्यादया वा ये मया सार्द्धं सह किञ्चित् स्पर्द्धितुम् आक्रन्दितुं वचसा योद्धुम् इत्यर्थः। आवर्जितोद्यमाः कृतोद्योगा न भवन्ति? केऽपि न सन्ति इत्यर्थः। अनुष्टुब् वृत्तम्॥ २१॥

काल:। भज्ज ! बह्मसुहणिग्गदा वेआ ता कधं भवदा विरइदा ? (द)।

मह्रा। (सक्रोधं) आः क्षुद्रबुद्धिं ब्रह्माणं गणयसि ? शृणु, तत्कौलिन्यपरीक्षार्थं स्वर्गगतेन मया (ध)।

पाद्यं विष्णुपदीजलेन चरणे दत्तं शिरोवर्त्तिना
तत्क्रोधेन करप्रहारनिकरैः सन्ताड़ितः शङ्करः।
आयुष्मान् न कृतो भयात् प्रणमति ब्रह्मण्यवज्ञावशात्
नो दृष्टः स्त्रिदशप्रतिग्रहपरः पापास्पदो गीष्पतिः॥ २२॥

---

आर्य्य ! ब्रह्ममुखनिर्गताः वेदाः तत्कथं भवता विरचिताः ? (द)।

---

ब्रह्ममुखनिर्गताः विधिवदनप्रचारिताः वेदाः तत्कथं भवता विरचिताः ? कृताः ? (द)।

आ इति। कोपसूचकमव्ययम्। क्षुद्रबुद्धिम् अल्पबुद्धिं ब्रह्माणं विधिं गणयसि सम्मन्यसे शृणु अवगच्छ तत् तत्कौलिन्यपरीक्षार्थं ब्रह्मणः वंशमर्य्यादां ज्ञातुं स्वर्गगतेन दिवं गतेन मया यत्कृतम् (ध)।

पाद्यमिति। शिरोवर्त्तिना शिरःस्थितेन विष्णुपदीजलेन मन्दाकिनीजलेन पाद्यं पादप्रक्षालनार्थं परिकल्प्य चरणे मम पादे दत्तम् अर्पितम्। तत् क्रोधेन मम चरणे शिरःस्थितगङ्गाजलसम्पादितपाद्यार्पणजनितकोपेन, करप्रहारनिकरैः हस्तताड़नादिभिः शङ्करः शिवः सन्ताड़ितः तर्जितः कुतः मम चरणे मस्तकजटाभ्यन्तरगतत्वेन मलिनत्वादिदूषितं जलम् अर्पितम् इत्युक्त्वा मया सक्रोधं मुष्टिचपेटाघातादिभिः ताड़ितः शिवः इति भावः। भयात् भयं प्राप्य ब्रह्मणि अजे प्रणमति प्रणामं कुर्वति सति आयुष्मान् दीर्घायुः न कृतः आयुष्मान् भव इति आशीर्वादः न विहितः। तथा गीष्पतिः देवगुरुः त्रिदशप्रतिग्रहपरः त्रिदशानां देवानां दानग्रहणशीलः अतः पापास्पदः पापाश्रयः इति अवज्ञावशात् इति अश्रद्धया न दृष्टः न अवलोकितः। शार्दूलविक्रीड़ितं वृत्तम्॥ २२॥

मदः । अलं वाग्विस्तरेण ? निर्वाह्यताम् अस्माकं विवाह-द्वयम् (न) ।

मह्वा। अहम् अप्रतिग्राही (प) ।

कुला। गणिआप्पतिग्गेहे को दोषः ? (फ)

मह्वा। भद्रमुक्तम् एतत् पूर्वं न ज्ञायते कुलीना इयं वेश्या (सादरं) भगवन् ! कया सह कस्य विवाहः ? (ब) ।

विश्वः। आवां योग्यावुपाध्यायौ वरावस्या मृगीदृशः ।

शिष्यावेतावमुष्या स्तु तिमिराकुलचक्षुषः ॥२३॥

मह्वा। (विहस्य आत्मगतम् ।) अहो आश्चर्य्यम् (भ) ।

---

गणिकाप्रतिग्रहे को दोषः ? ( फ ) ।

---

अलं वाग्विस्तरेण ? वचनबाहुल्येन अलम् ? प्रयोजनं नास्ति । निर्वाह्यतां सम्पाद्यताम् अस्माकं विवाहद्वयम्, आवयोः शिष्ययोश्च मृगाङ्कलेखया, बन्धुरया च सह, एतत् विवाहद्वयम् ( न ) ।

अहमप्रतिग्राही, प्रतिग्रहपराङ्मुखः कस्मादपि किञ्चित् न प्रतिगृह्णामि इत्यर्थः ( प ) ।

गणिकायाः वेश्यायाः प्रतिग्रहे दानग्रहणे को दोषः ? कोऽपि दोषो नास्ति इत्यर्थः ( फ ) ।

भद्रमुक्तं सुष्ठु भणितमेतत्, पूर्वं प्राक् न ज्ञायते नावगम्यते। इयं वेश्या कुलीना सत्कुलोत्पन्ना । भगवन् प्रभो ! एतेषां मध्ये कया कन्यया सह कस्य वरस्य विवाहः भविष्यति इति शेषः ( ब ) ।

आवामिति । अस्याः मृगीदृशः मृगाक्ष्याः, आवाम् उपाध्यायौ अध्यापकौ योग्यौ समुचितौ वरौ परिणेतारौ तु पुनः तिमिराकुलचक्षुषः तिमिरान्धनयनायाः अमुष्याः बन्धुरायाः इति यावत् एतौ कुलालकलहाङ्कुरनामानौ शिष्यौ योग्यौ परिणेतारौ इत्यर्थः ॥२३॥

अहो आश्चर्यं ! अध्यापकयोरेतादृक् व्यवहारः इत्यर्थः (भ)।

(पुनः मृगाङ्कलेखामवलोक्य) आश्चर्य्यम् अस्याः (म) ।
प्रविशति कटाक्षविशिखे तीक्ष्णतरे भेदके च हृदयानाम् ।
तथापि लक्ष्यीभूय स्थातुमपेक्षा भवेन्न कस्यापि ? ॥ २४ ॥

अपिच ।

दुग्धसमुद्रसमुत्थितविषमिव परिदुःसहा हरस्यापि ।
अस्या दृशि विमलायां तरलतरतारकातिभीमा ॥ २५ ॥

किञ्चास्या निर्भरपरिरम्भणं विना न मया इदानीं जीवनीयम् (य) ।

(प्रकाशम् ।)

एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सित-
ज्योत्स्नाभिर्न भजत्यदो मृगदृशः शङ्के प्रकाशं पुनः ।

---

अस्याः वेश्यायाः आश्चर्य्यं किमद्भुतमवलोकयामि इति शेषः (म) ।

प्रविशतीति । अस्याः मृगाक्ष्याः, हृदयानां भेदके विदारके तीक्ष्णतरे खरतरे कटाक्षविशिखे नयनबाणे प्रविशति मर्म्म स्पृशति सति तथापि लक्ष्यीभूय, प्रहरणाय शरव्यो भूत्वापि स्थातुं तत्समीपे वर्त्तितुं कस्य जनस्य अपेक्षा इच्छा न भवेत् । यद्यपि अस्याः नयनशरघातेन प्राणाः अयास्यन्, तथापि अस्याः समीपे अहम् अस्थास्यमितीच्छा सर्व्वेषामपि भवेदिति भावः । आर्य्या ॥ २४ ॥

पुनरपि वर्णयति दुग्धेति । अस्याः मृगाक्ष्याः विमलायां स्वच्छायां दृशि नयने अतिभीमा हृदयविदारिणी तरलतरतारका, अतिचञ्चलकनीनिका, दुग्धसमुद्रसमुत्थितविषमिव क्षीरोदसागरमन्थनोत्पन्नगरलमिव हरस्यापि नीलकण्ठस्यापि परिदुःसहा दुःसहनीया । अस्याः अतिचञ्चलनयनतारकादर्शनेनैव महादेवस्यापि धैर्य्यच्युतिः स्यात् अस्माकन्तु का कथा इति भावः । आर्य्या ॥ २५ ॥

किञ्च परन्तु अस्याः निर्भरपरिरम्भणं गाढ़ालिङ्गनं विना इदानीम् अधुना मया न जीवनीयं न प्राणितव्यम् (य) ।

एतस्याः मृगदृशः मृगाक्ष्याः स्तनपद्मकोरकयुगं कुचपङ्कजमुकुलयुगलं यस्य आननेन्दोः मुखचन्द्रस्य सितज्योत्स्नाभिः शुक्लवर्णचन्द्रिकाभिः हास्यरूपशुक्लवर्ण-

तस्मिँल्लोचनपङ्कजं विकसितं भ्रूभङ्गसंसेवितं
स्वान्ते संशयमातनोति सुतरामेतन्ममैवासकृत् ॥२६॥

अपिच ।

अहो ! मूढ़ास्ते ।

पानायाधरतोऽमृतं वसतयेऽप्यस्याः स्तनक्ष्माधरो-
ऽधस्तात् सज्जघनान्तकन्दरधरः सख्याय चक्षुर्मृगः ।
जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं
चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः ? ॥२७॥

---

किरणैरेवेत्यर्थः। प्रकाशं विकाशं न भजति न प्रस्फुटति कोरकाकारेणैव तिष्ठति इत्यर्थः। अदः इदं शङ्के इत्यहं मन्ये। पुनः किन्तु तस्मिन् मुखचन्द्रे भ्रूभङ्ग संसेवितं भ्रूकुटियुक्तं विकशितं प्रस्फुटितं लोचनपङ्कजं नयनकमलं मम स्वान्ते मनसि सुतरां सम्यक् असकृत् वारंवारमेव संशयं सन्देहम् आतनोति प्रकटयति मुखचन्द्रस्य हास्यरूपशुक्लवर्णचन्द्रिकाभिः कुचपङ्कजमुकुलयुगलं न प्रस्फुटति परन्तु मुखचन्द्रोपरिस्थितं नयनकमलं प्रस्फुटितं किमिदं ? इत्येवं सन्देहः मम मनसि सर्वदैव जायते इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

पानायेति। अस्याः मृगदृशः अधरतः ओष्ठबिम्बे अमृतं सुधा पानाय पानार्थं वर्त्तते। तथा अधस्तात् सज्जघनस्य अधःस्थितपीवरनितम्बदेशस्य अन्ते शेषभागे कन्दरं गह्वरं धरति यः तादृशः स्तनक्ष्माधरः कुचगिरिरपि वसतये वासाय वर्त्तते। तथा चक्षुः नयनं मृगः हरिणः सख्याय बन्धुत्वाय विद्यते। तथा मनोहरकथा सुन्दरवाक्यम् जप्यः जपार्हः मन्त्रवरः मन्त्रश्रेष्ठः विद्यते। तथा वक्त्राम्बुजं वदनकमलं ध्यानाय एकाग्रचेतसा चिन्तनाय वर्त्तते च। इत्थं देहतपःस्थले एवंविधशरीरतपोवने सति विद्यमाने सन्तः पण्डिताः कथं केन हेतुना वनान्तं वनमध्यं गताः ? याताः। तपस्विनाम् आवश्यकीयद्रव्यनिचयाधारे मृगदृशः शरीरतपोवने विद्यमानेऽपि पण्डिताः केन हेतुना वनमध्यं याताः ? अहो ते मूढ़ाः पण्डिताभिमानिनः इति गद्येन अन्वयः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २७ ॥

भो भो! विघ्नभण्ड! लग्नकरणार्थं कथं न आहूयते महायात्रिकनामा मौहूर्त्तिकः (र)।

(प्रविश्य महायात्रिकः पञ्जिकां प्रसार्य्य) भो भो पण्डित! किं गणनीयम्।

भट्टः। क्रियतां वैवाहिकक्षणः (ल)।

(महायात्रिकः। भूमौ कठिनीं पातयित्वा)।)

यत्र कुत्रापि लग्ने च वासरे यस्य कस्यचित्।
यत्र कुत्रापि नक्षत्रे यद्वा तद्वा विधीयताम्॥ २८॥

महानिन्दः। (स्वगतम्) योग्य एष दैवज्ञः। (प्रकाशम्) भो भो! सांवत्सरिक कदाचिदनेन वैधव्यं जायते (व)।

महायात्रिकः। किं पुरुषहीना धरणी? यदेतयोर्वैधव्यं भविष्यति (श)।

---

विवाहलग्ननिरूपणार्थं कथं न आहूयते नाकार्य्यते, महायात्रा मरणं निरूप्यते येन, सः मौहूर्त्तिकः दैवज्ञः (र)।

वैवाहिकक्षणः विवाहयोग्यो लग्नः (ल)।

ज्योतिर्वचनमाह यत्रेति। यत्र कुत्रापि यस्मिन् कस्मिन्नपि लग्ने मेषाद्यन्यतमराश्युदये च, यस्य कस्यचित् ग्रहस्य वासरे दिवसे, तथा यत्र कुत्रापि यस्मिन् कस्मिन्नपि नक्षत्रे अश्विन्याद्यन्यतमनक्षत्रे इत्यर्थः। यद्वा तद्वा यथेच्छं विधीयताम् अनुष्ठीयताम्। अनुष्टुब् वृत्तम्॥ २८॥

योग्यः उपयुक्तः दैवज्ञः ज्योतिर्वित्। अनेन लग्नावधारणेन कदाचित् कस्मिन्नपि समये वैधव्यं पतिहीनत्वं जायते भविष्यति न वा? (व)।

किमिति प्रश्ने। किमियं धरणी पृथिवी, पुरुषहीना? पुरुषरहिता? यत् यस्मात् एतयोः बन्धुराममाङ्गलिकयोः वैधव्यं पतिराहित्यं भविष्यति भवेत् पृथिव्यां पुंसि विद्यमाने एतयोः वैधव्यं कथं सम्भवेत् इति भावः (श)।

महानिन्दकः । भो भो विश्वभण्डादयः ! विल्वमाल्यधारिणो यथोद्दिष्टतल्पे अनुसरथ (ष) ।

महायात्रिकः । (सहासं) युक्तं पुरुषाणां बध्यमानानां भूषणम् (स) ।

( सर्वे यथोद्दिष्टतल्पे करग्रहं विधाय उपविशन्ति । हृद्धा पतिद्वयमध्यगता ।)

(नायिका च तथा सविषादम् आत्मगतम्) (ह) ।

श्रोगौरी पादपद्माच्चण मतिविजने जक्किदं सव्वआलं
णिच्चं चित्तेण भत्ती दृढतल मणिसं जक्किदा पुप्फवाणे ।
तस्माज्जेवं प्पसाओ णिहिलसुरकिदो जो गुरुप्पाणदण्डो
पच्चासण्णो विहाओ विसमतररुजा जीर्ण्णविप्पेहि दोहिम् ॥२९॥

श्रीगौरीपादपद्मार्चनमतिविजने यत् कृतं सर्वकालं
नित्यं चित्तेन भक्तिर्दृढतरमनिशं यत्कृता पुष्पवाणे ।
तस्मादेवं प्रसादो निखिलसुरकृतो यद्गुरुप्राणदण्डः
प्रत्यासन्नो विवाहो विषमतररुजा जीर्णविप्रद्वयाभ्याम् ॥ २९ ॥

विल्वमाल्यधारिणः श्रीफलपत्रमालां बिभ्रतः, सन्तः यथोद्दिष्टतल्पे निर्दिष्टशय्यायाम् अनुसरथ गच्छथ यूयमिति शेषः ( ष ) ।

बध्यमानानाम् अवश्यनाश्यानां पुरुषाणां भूषणम् आभरणं युक्तम् उचितम्। एते वरा विनाशोन्मुखाः इति भावः ( स ) ।

हृद्धा बन्धुरा पतिद्वयमध्यगता, कुलालकलशाङ्कुरमध्यस्थिता, नायिका कृशाङ्गिखा च तथा पतिद्वयमध्यगता अध्यापकद्वयमध्यगता ( ह ) ।

आत्मगतत्वं विवृणोति । श्रीति । अतिविजने अतिनिर्जने उपविश्य इत्यर्थः । श्रीगौर्याः श्रीपार्वत्याः पादपद्मार्चनं पादपद्मस्य अर्चनं पूजनं सर्वकालं सततं यथा स्यात्तथा कृतम् अनुष्ठितं इति यत् तथा नित्यं प्रतिदिनं चित्तेन मनसा पुष्पवाणे कामदेवे दृढतरं प्रगाढं यथा स्यात्तथा अहर्निशं निरन्तरं भक्तिः कृता विहिता इति यत्, तस्मात् गौरीपादार्चनस्मरभक्तिकरणादेव निखिलसुरकृतः सकलदेवजनितः,

मङ्गानिन्दकः। भुजङ्ग! समानीयतां मधुपर्कः (घ)।

(उपसृत्य भुजङ्गः।) अज्ज महुणो अहावो, अत्थि दुद्धं णीरम्पि (क)।

मङ्गानिन्दः। समानय।

भुजङ्गः। समानीय अर्पयति (ख)।

मङ्गानिन्दः। प्रत्येकं वराभिमुखम्।

ओं श्मशानानलदग्धोऽसि परित्यक्तोऽसि बान्धवैः।
इदं नीरमिदं क्षीरं स्नात्वा पीत्वा सुखीभव॥ ३०॥

---

आर्य! मधुनः अभावः, अस्ति दुग्धं नीरमपि (क)।

---

एवं प्रसादः अनुग्रहः संवृत्तः इत्यर्थः। यत् यस्मात् प्रसादात् अनुग्रहात् इति यावत् द्वेतीः गुरुप्राणदण्डः गुर्वोः अध्यापकयोः प्राणदण्डः जीवननाशः प्रत्यासन्नः सम्मुखीनः निकटवर्त्ती इति यावत् भवति इति शेषः। कस्मात्प्रसादः इत्याशयेनाह विषमेति। विषमतररुजा अतिशयविषमरोगेण जीर्णाभ्यां विप्रद्वयाभ्यां सम्यक्जीर्णब्राह्मणाभ्याम् अतिवृद्धगुरुभ्यामित्यर्थः सह समं विवाहः परिणयः भवति। स्रग्धरा वृत्तम्॥ २९॥

भुजङ्ग! रे उपनायक! आनीयतां समाक्रियताम् मधुपर्कः घृतदधिक्षीरमधुशर्करारूपः (घ)।

आर्य! मधुनः क्षौद्रस्य अभावः, मधु नास्ति। अस्ति वर्त्तते दुग्धं क्षीरं नीरम् अपि जलञ्च (क)।

समानय, तत् आनय इत्यर्थः (ख)।

वराभिमुखं वरयोः मुखम् अभिलक्ष्यीकृत्य नीरं क्षीरञ्च गृहीत्वा मृतस्य नीरक्षीरयोर्दानमन्त्रं पठति। ओं इति त्वं श्मशानानलदग्धोऽसि श्मशानाग्निना दग्धोऽसि बान्धवैः बन्धुभिः परित्यक्तोऽसि विरहितोऽसि, अतः इदं नीरं जलम् इदं क्षीरं दुग्धं मया दत्तमिति शेषः। त्वं स्नात्वा अनेन जलेन स्नानं कृत्वा इदं क्षीरं दुग्धं पीत्वा सुखीभव, श्मशानानलदाहजन्यं बान्धवत्यागजन्यं क्लेशञ्च विहाय सुखम् अनुभव इत्यर्थः। अनुष्टुब् वृत्तम्॥ ३०॥

(पुनर्दूर्वाक्षतमादाय।)

मरणं प्राणिनां नित्यं जीवनं स्वप्नवद् भुवि।
भवद्भिरिति विज्ञाय कर्त्तव्या नात्र शोचना॥ ३१॥

(पुनरुत्थाय उच्चैः।)

पितृकाननमेदिन्यां महाशय्यानुशायिभिः।
सुचिरं स्थीयतां नित्यं महानिद्रावलम्बिभिः॥ ३२॥

(इति सर्वेषां मौलिषु दूर्वाक्षतम् अर्पयति)।

महायात्रिकः। तत् युक्तं वराणां श्मशाने चिताशयनम् (ग)।

महानिन्दः। (उपसृत्य) भो कालङ्काङ्कुर! दीयतां प्रथमतः शतवर्षकन्यादानदक्षिणा (घ)।

कलः। [शङ्काशनलड्डुकमर्पयति] (ङ)।

महानिन्दः। स्वस्ति [इति गृहीत्वा सानन्दं शिरसि निधाय] ओं गायत्र्यै नमः [इति भूमौ किञ्चित् त्यक्त्वा पुनर्भक्षयित्वा सोत्साहम्]।

---

पुनराशीर्वचनं पठति मरणमिति। भुवि पृथिव्यां प्राणिनां प्राणधारिणां मरणं प्राणवियोगः नित्यं सर्वदैव भवति इति शेषः। तथा जीवनं श्वसनं स्वप्नवत् क्षणं तिष्ठति इति शेषः। इति विज्ञाय अवगम्य अत्र मरणजीवनविषये भवद्भिः शोचना शोकः न कर्त्तव्या न विधेया। अनुष्टुब् वृत्तम्॥ ३१॥

पुनरुच्चैः पठति। पितृकाननेति। महानिद्रावलम्बिभिः गतप्राणैः तथा महाशय्यानुशायिभिः चिताधिरूढाभिः भवद्भिः इति शेषः पितृकाननमेदिन्यां श्मशानभूमौ सुचिरं बहुकालं व्याप्य नित्यं सर्वदा स्थीयताम्, अनुष्टुब् वृत्तम्॥ ३२॥

वराणां परिणेतॄणां श्मशाने पितृभूमौ चिताशयनं चिताशय्यारोहणं तत् युक्तम् उचितम् (ग)।

भो कालङ्काङ्कुर! प्रथमतः प्राक् शतवर्षकन्यादानदक्षिणा शतवर्षवयस्कायाः कन्यायाः वृद्धायाः वध्वाः इति यावत् आदानस्य ग्रहणस्य दक्षिणा दीयतां दक्षिणामन्तरेण आदानस्य फलं न भवति इति भावः (घ)।

शङ्काशनलड्डुकं शङ्काचूर्णनिर्मितलड्डुकम् अर्पयति ददाति (ङ)।

जनयति सुरतेषु मुदं प्रथयति पीयूषवर्षिणीं वाणीम् ।
रचयति लोचनकुतुकं स जयति शक्राशनानन्दः ॥ ३३ ॥

बन्धु । कुलीणअरो आचाज्जो (च) ।

महानिन्दः । (पुनरुपसृत्य) भो भो भगवन् मिश्र ! प्रदीयतां कन्यादानदक्षिणा (छ) ।

उभौ वदतः । प्रतिपाल्यतामब्दचतुष्टयम् (ज) ।

महानिन्दः । तावदेषा बन्धकीभवतु ।

(इति मृगाङ्कलेखाया हस्तं धृत्वा तया सह सहर्षं नृत्यति) (झ)

महायात्रिकः । भो भो महानिन्दकाचार्य्य ! किमिदानीं भवतामपेक्षितमस्ति ? (ञ) ।

---

कुलीनवरः आचार्य्यः (च) ।

---

शक्राशनलड्डुकभक्षणानन्तरं तस्य प्रशंसावचनं पठति जनयति इति । सः शक्राशनानन्दः भङ्गाचूर्णनिर्मितलड्डुकभक्षणानन्दः जयति जययुक्तो भवतु यः सुरतेषु शृङ्गारेषु मुदं हर्षं जनयति उत्पादयति । तथा पीयूषवर्षिणीम् अमृतस्यन्दिनीं वाणीं वाचम् प्रथयति प्रकटयति । तथा लोचनकुतुकं नयनामोदं रचयति घटयति । आर्य्या ॥ ३३ ॥

कुलीनश्रेष्ठः आचार्य्यः महानिन्दकाचार्य्यः (च) ।

भो भो मिश्र ! उपाध्याय ! प्रदीयतां कन्यादानदक्षिणा कन्यायाः मृगाङ्कलेखायाः आदानस्य ग्रहणस्य दक्षिणा, कन्यायाः आदानस्य दक्षिणामन्तरेण फलं न भवति इत्यर्थः (छ) ।

प्रतिपाल्यताम् अपेक्ष्यताम् अब्दचतुष्टयं वर्षचतुष्टयम् (ज) ।

तावत् वर्षचतुष्टयं यावत् इत्यर्थः एषा मृगाङ्कलेखा, बन्धकी भवतु यावत् दक्षिणां न दास्यसि तावत् प्रतिभूत्वेन तिष्ठतु इति भावः । इति मृगाङ्कलेखायाः हस्तं धृत्वा गृहीत्वा तया मृगाङ्कलेखया सह नृत्यति (झ) ।

भवताम् इदानीं किम् अपेक्षितं किञ्चिदवशिष्टम् अस्ति वर्त्तते ? एतेनापि किं दक्षिणातर्ष्णपी वर्त्तते ? इति भावः (ञ) ।

महानिन्दः। (सहर्षम्)।

लब्धेयं युवतिर्जगज्जनदृशामानन्दभूमिर्भृशं

धूर्त्तानां निकरं प्रवञ्च्य सहसा प्राप्ताश्च हृत्प्रीतयः।

सम्प्रत्युद्भटसम्बरारिसमरं नानारतास्त्राङ्कितं

गत्वा केलिगृहं विधातुमधिकं वाञ्छावरीवृत्यते ॥ ३४ ॥

इति हास्यार्णवनामप्रहसनं समाप्तम्।

---

अभिलाषं प्रकाशयति लब्धेति। जगज्जनदृशां भुवनजननयनानाम् आनन्दभूमिः आमोदस्थली इयं युवतिः धूर्त्तानां शठानां निकरं समूहं भृशं प्रवञ्च्य अतिशयं वञ्चयित्वा लब्धा मया प्राप्ता, तथा सहसा हठात् हृत्प्रीतयश्च मनसः तृप्तयश्च प्राप्ताः, अधिगताः। सम्प्रति अधुना केलिगृहं शृङ्गारमन्दिरं नानारतास्त्रैः बहुविधरमणास्त्रैः नखक्षतादिरूपैरिति यावत् अङ्कितं चिह्नितम् उद्भटसम्बरारिसमरम् अतिशयकामयुद्धं विधातुं कर्त्तुं वाञ्छा इच्छा वरीवृत्यते अतिशयेन वर्त्तते यदि अनया सह मम कामसमरं भवेत् तर्हि अभीष्टसिद्धिः स्यादिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

स्वर्गेऽवनिभूधराब्धिसलिले किं कानने केतने

किं वर्णाश्रम धर्मसेवनविधौ किं वा विवेकाश्रये ?।

ज्ञाने वा भजने किमिव रसिकाः ध्यायन्ति ये सन्ततं

क्वास्ते सर्वसुखं सदेति हृदि ते मज्जन्तु हास्यार्णवे ॥

इति श्रीश्रीनाथवेदान्तवागीशभट्टाचार्य्यविरचिता हास्यार्णवप्रहसनव्याख्या समाप्ता।

---